अर्हम्

तत्त्वतः श्रीमद्भिर्हरिभद्रसूरिभिः प्रणीतं सावचूर्णिकं

# हिंसाष्टकं

श्रीहरिभद्रसूरिसूत्रिता सर्वज्ञसिद्धिश्च एन्द्र स्तुतयश्च

प्रकाशिका—श्रीऋषभदेवजी केशरीमलजी श्वेताम्बर संस्था, रतलाम.

मुद्रयिता—इन्दौर जैनबन्धुमुद्रणालयाधिपतिः श्रेष्ठि. ओसवाल जुहारमल मिश्रीलाल पालरेचा.

वीर संवत् २४५० विक्रम संवत् १९८० क्राइस्ट सन् १९२४. पण्यं ०

अर्हम्

तत्वतः श्रीमद्भिर्हरिभद्रसूरिभिः प्रणीतं स्वोपज्ञं

# श्रीहिंसाष्टकं

अपारपारावारसंसारतल्पप्रपतयालुतया संशयालूनां जन्तूनां हिंसैव बीजं, ततस्तस्याः स्वरूपं यथासमयं प्रदर्श्यते—तत्र हिंसा द्विधा, द्रव्यतो हिंसा कायात् पृथक्करणं (१) भावतः—कठोरहृदयत्वेनाकुट्टिप्रमाददर्पाभिनिविष्टदुष्टाध्यवसायविशेषैः पीडापादनचिकीर्षा(२), कठोरहृदयत्वेन रौद्रध्यानस्यावश्यंभाविफलत्वात्, सुकुमारहृदयत्वेनार्त्तध्यानस्याप्यभावः,कठोरहृदयाभावे रौद्रध्यानस्य वितथभावो दृष्टः प्रसन्नचन्द्रादिवत्, न चास्यार्त्तध्यानसम्भवः, तस्य राज्यादिभोगविषये लीनत्वात्, किन्तु श्रेणिकसैनिकाग्रेसरदुर्मुखमुखानिःसरद्द्विषज्जनगृहीतराज्यादिश्रवणबालपुत्रकदर्थनाद्यर्थितोद्भूतमोहनीयकर्मोद्भटाविकटसंग्रामाङ्गणसङ्कल्पाविकल्पजालप्रधनसप्तमनरकप्रायोग्यपौद्गलिकाभ्याहरणेऽपि सुकुमारहृदयत्वेन संक्षालनस्येवानन्तानुबन्धित्वपरिणामेऽपि रौद्रध्यानमेवेति पुत्रमोहाद्यपेक्षामात्रपूर्वकमेवेति युक्तं इत्याशङ्कापरः कश्चिदाशङ्कते-तमाह-न चास्यार्तसम्भवः, स्वयमनभिलाषात्, केवलमस्याप्रमत्तस्थितस्य चरित्रवतस्तथावीर्योल्लासाद्वैरिहननसामर्थ्यादुल्लसच्छक्तिविशेषस्य तत्समय एव दुर्मुखमुखविनिर्गतवैरिपराभवश्रवणमात्रादेव पूर्वनिबन्धप्रायोग्यनरकदलानुभवनवेदनातिभासभासितात्ममनोद्रव्यस्यैव तदवभासतोऽवस्थितप्र-

भापटलवत् प्रदीपोपमस्य तदुद्भूतवैरिपराजयजनितभावनाभावितस्य स्वमनस्येव तच्चेष्टाकृतकलुषितस्य तद्भावनाभावितं नरकप्रायोग्यपूर्वोनिवध्धदलिकवेदनानुभवरूपं क्लिष्टमनो जातं, नतु रौद्रं, नापि तस्य संजातं नापवर्त्तनं, तदनुरूपस्यैव तदुद्भावनाद्, आर्त्तस्य प्रमत्ते मुख्यताप्रायोग्यात्, त्वरितमेव तत्परावर्त्तनमिति न गुणस्थानापक्रमःइति, ततस्तस्य रौद्रध्यानानन्तर्गतता निसर्गतःप्रतिभाति, उक्तञ्च-'राज्योपभोगशयनासनवाहनेषु, स्त्रीसङ्गमाल्यमणिरत्नविभूषणेषु । इच्छाभिलाषमतिमात्रमुपैति मोहात्, ध्यानं तदार्तमिति तत् प्रवदन्ति धीराः ॥१॥ सञ्छेदनैर्दहनभञ्जनमारणैश्च, बन्धप्रहारदमनैर्विनिकृन्तनैश्च । ये यांति रागमुपयान्ति च नानुकम्पं, ध्यानं तु रौद्रमिति तत् प्रवदन्ति धीराः ॥२॥ सूत्रार्थसाधनमहाव्रतधारणेषु, बन्धप्रमोक्षगमनागमहेतुचिन्ता । पञ्चेन्द्रियव्यपगमश्च दया च भूते, ध्यानं तु धर्ममिति तत् प्रवदन्ति धीराः ॥ ३ ॥ यस्येन्द्रियाणि विषयेषु पराङ्मुखानि, सङ्कल्पनातिकुविकल्पविकारदोषैः । योगैः सदा त्रिभिरहो निभृतान्तरात्मा, ध्यानोत्तमं प्रवरशुक्लमिदं वदन्ति ॥४॥ आर्त्ते तिर्यगथो तथा गतिरधो ध्याने तु रौद्रे सदा, धर्मे देवगतिः शुभं बहुफलं शुक्ले तु जन्मक्षयः । तस्माद् व्याधिरुगन्तके हितकरे संसारनिर्वाहके, ध्याने शुक्लवरे रजःप्रमथने कुर्यात् प्रयत्नं बुधः ॥ ५ ॥' कठोरहृदयत्वेन, हिंसा हेयेति सोच्यते । देहनशो भवेत् पीडा, या तां हिंसां प्रचक्षते ॥ १ ॥ दुःखोत्पत्तिर्मन.क्लेशः, तत्पर्यायस्य च क्षयः । यस्याः स्यात् सा प्रयत्नेन, हिंसा हेया विपश्चिता ॥ २ ॥ प्राणी प्रमादतः कुर्यात्, यत्प्राणव्यपरोपणम् । सा हिंसा जगदे प्राज्ञैर्बीजं संसारभूरुहः ॥ ३ ॥ नित्यानित्ये ततो जीवे, परिणामे वियुज्यते । हिंसा कायवियोगेन, पीडाऽतः पापकारणम् १ ॥४॥ शरीरी म्रियतां मा वा, ध्रुवं हिंसा प्रमादिनाम् । सा प्राणव्यपरोपेऽपि, प्रमादरहितस्य न२॥५॥ एवं ये केचनात्ममनोपरिणामानां भावनिक्षेपत्वं मन्यन्ते, तदसङ्गतं, यत आत्मनः परिणामानां सर्वत्र द्रव्यनिक्षेपे सहचरितत्वेन द्रव्यभावनिक्षेपद्वयमसम्मतं स्यात् विपरीतावेशप्रसंगश्च स्यात्, जिनवरैस्तु द्रव्यनिक्षेपानन्तरं भावनिक्षेपः स्पष्टत्वेन प्रतिभासित इत्यलं प्रतिपादनेन, त्रिपु

निक्षेपेषु भावनिक्षेपो व्याख्यातः, यदुक्तमनुयोगद्वारवृत्तौ– 'भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तत् द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं कथितम् ॥ १ ॥ 'अनुपयोगो द्रव्यं वा' उपयोजनमुपयोगः–जीवस्य बोधरूपो व्यापारः, स चेह विवक्षितार्थे चित्तस्य विनिवेशनरूपो गृह्यते, न विधत्तेऽसौ यत्र सोऽनुपयोगः इति, यद्यपि भावाभिख्याः५, स्वभाव १ चित्त२ आत्म३ योन्य १४ भिप्रायश्चेति ५ उपयोगरूपो भावो भाष्यकृदाशयेन कुत्रचिद् व्याख्यातस्तथापि श्वेताम्बरप्रक्रियायां भावस्य कारणभूतं वस्तुनि चित्तविनिवेशनसहितबोधरहितं द्रव्यं स्वतन्त्रं विवक्ष्यते, न त्वात्मस्वभावपरिणामो भावः, तत्स्वभावगृहीताः पुद्गलाःद्रव्यं विवक्ष्यते, विपरीतलक्षणो भाव इति, भावद्रव्ययुगपन्नि-र्माणोल्लेखरूपमिति तेन दिगम्बराः सर्वत्र द्रव्यानिक्षेपात् पूर्वं परिणामरूपभावनिक्षेपमानिनो निरस्ता द्रष्टव्याःइत्यलं प्रसंगेन । अथ चतुर्भंगीमाह-कस्याचिद् द्रव्यभावतो हिंसा स्यात् १, कस्यचिद् द्रव्यतो न स्यात्,२ भावतः स्यात्३, कस्यचिद् द्रव्यभावाभ्यां हिंसा न स्यात्४,तदेव विव्रियते

अविधायाऽपि हि हिंसां, हिंसाफलभाजनं भवत्येकः । कृत्वाऽप्यपरो हिंसां, हिंसाफलभाजनं न स्यात् ॥ १ ॥

'अविधायेति०-' । अकृत्वाऽपि द्रव्यहिंसां-प्राणादित्यागरूपां हिंसाफलं-नरकादिकं तस्य भाजनं भवति, तन्दुलमत्स्यवत्, सोऽपि नव मासान् गर्भे स्थित्वा निष्क्रमणानन्तरमन्तर्मुहूर्त्तायुरिति वृध्धसम्प्रदायः, सर्वे गर्भजतिर्यंचो गर्भजमनुष्यवदिति वचनात्, महामत्स्यमुखे गत-प्रत्यागतं कुर्वाणान् मध्यमत्स्यान् दृष्ट्वा स्वमनसि-यद्यहमेषो द्रव्यमहाकायः स्यां तदा सर्वानभक्ष्यमिति विचारणया कठोरहृदयप्रादुर्भूतरौद्र-ध्यानसहचारिणी भावहिंसा नरकफलवतीति तृतीयभंगः ३, 'कृत्वेति' अपरः कश्चिद् द्रव्यहिंसां कृत्वाऽपि नरकादिदुःखभाग् न भवतीति, द्रव्यहिंसां-प्राणातिपातरूपां करोति प्राणी, सुकुमारहृदयत्वेन तथाविधदुष्टाध्यवसायाभावात्, पीडोत्पादने सत्यपि न तथाविधः कर्मबन्धो भवति येन तत्फलभाग् भवति, द्वादशगुणस्थानवर्त्तिसाधुवत्, स हि सकलमोहनीयक्षयजनिततीव्रतीव्रतरशुभाध्यवसाययोगवान् पथि गमागमं कुर्वाणः

तीव्रानुबन्धराहित्येन पादोत्क्षेपे तत्संयोगद्रव्यक्षेत्रकालभावसम्बन्ध्यवश्यंभाविस्वभावेन वध्यनिकाचितमरणान् कपोतशावकादीन् अथवा पक्ष्मनिमेषोन्मेषेण वा शरीरावष्टम्भेन वायुकायजीवान् हिनस्ति तथाऽपि तस्य प्रथमसमयबद्धा द्वितीयसमये वेदिता तृतीयसमयनिर्ज्जीर्णेतीर्यापथिक्या न हिंसाफललवभाक्त्वं, सदुपयोगरूपेण तथैवासद्भूतत्वाकलनीयत्वात्, तदुक्तं भगवत्यंगे—' अणगारस्स णं भंते ! भाविअप्पणो पुरओ जुगमायाए पेहाए रीयं रीयमाणस्स पायस्स अहे कुक्कडपोए वा वट्टपोए वा कुलिंगपोए वा परिआवज्जेज्जा, तस्स णं इरियावहिआ नो संपराइआ, जस्स णं कोहमाणमायालोभा सव्वथा वुच्छिन्ना तस्स णं इरियावहिआ हवइत्ति ' अत्र कश्चिदाशङ्कते— ' पुरओ जुगमायाए पेहाए ' पुरतः पृष्ठतः पार्श्वतश्च युगमात्रया दृष्ट्याऽपेक्ष्यमाणः, तत्तु क्षीणमोहकेवलिनोऽभावात्, केवलज्ञानेन सर्वशो दृष्टत्वात्, कश्चिदन्यगुणस्थानवर्त्ती साधुर्भवितुमर्हति, सत्यं, सर्वेषां साधूनां पथीदृश्येव रीतिरत्र तु सौत्रशैलीत्वात् पाठः, रात्रिप्रतिक्रान्तौ क्षामणके ' भन्ते पाणे ' पाठवत्, पुनश्चाग्रे ' कोहमाणमायलोहा वुच्छिन्नेति ' ग्रहणात्; पुनः ' जाव णं भंते! एयति वेयति चलति फंदति घट्टति खुब्भति तं तं भावं परिणमति, ताव णं से जीवे आरंभमाणे समारंभमाणे सारंभमाणे बहूणं पाणाणं भूयाणं जीवाणं सत्ताणं दुक्खावणाए जूरावणाए तिप्पावणाए पिट्टावणाए परियावणियाए वट्टइ, चक्खूपम्हनिवायमवि सुहुमा इरियाकिरिया कज्जति ' इति जीवग्रहणे सयोगिकेवली ग्राह्य इति वृत्तिः । ' उच्चालियंमि पाए इरियासमियस्स संकमट्ठाए । वावज्जिज्ज कुलिंगी मारिज्ज तं जोगमासज्ज ॥१॥न य तस्स तन्निमित्तो बंधो सुहुमोवि देसिओ समए। अणवज्जो उवओगेण सव्वभावेण सो जम्हा ' ॥ २ ॥ शरीरी म्रियतां मा वा, ध्रुवं हिंसा प्रमादिनः । सा प्राणव्यपरोपेऽपि, प्रमादरहितस्य न ॥ १ ॥ ततो दुष्टाध्यवसायप्रमाददर्पाभिनिवेशाभावात् हिंसाऽप्यहिंसाफलवती, [ एतेन कदाग्रहपरोधर्मपारावारो निरस्तः ] इति द्वितीयभंगः ॥ २ ॥

एकस्याल्पा हिंसा ददाति काले तथा फलमनल्पम् । अन्यस्य महाहिंसा स्वल्पफला भवति परिणामे ॥ २ ॥

'एकस्येति०-' एकस्य जन्तोरल्पाभिनिवेशवशेन प्रमादवशतो जमालेरिव प्राणादित्यागरूपाऽल्पाऽपि हिंसा काले-परिपाकसमये बहुसंसारभ्रमणरूपं दुःखमनुभविष्यति, अन्यस्य प्राणिनो बहुहिंसावतो दृढप्रहारादेरिव कठोरहृदयभावेन तथाविधदुष्टाध्यवसायाविशेषाभावात् स्वल्पफलं—जनगर्हादिरूपं दिशति, नहि जीववधादेव हिंसा तीव्रनरकादिदुःखदात्री भवति, किन्तु प्रमादजनिततीव्रतीव्रतरदुष्टाध्यवसायप्रादुर्भूतकठिनहृदयसहकृतपीडोत्पादनभावापेक्षः कर्मबन्धः, तथा वैद्यस्य सम्यग् रोगप्रतिक्रियां कुर्वाणस्य रोगिमरणे न कर्मबन्धः, तथाध्यवसायाभावात्, अपरस्य सर्पबुद्ध्या रज्जुं घ्नतो बालबुध्ध्या खलपिण्डं पचतो वा प्रद्वेषेण भग्नपदकण्टकस्य द्वेधाकरणे तथाध्यवसायवशात् नूतननूतनतरकर्मबन्धो भवति, यदुक्तंसूयगडांगे—'जे केइ खुड्डगा पाणा, अदुवा संति महालया । असरिसं सिया वेरं, सरिसं तेहि णो वदेत्ति "उच्चालियंमि पाए य" इति१ भंगी अध्यवसायविशेषादधिकाधिकतरन्यूनन्यूनतरबन्धभाक्त्वेन विवृता ॥ २ ॥

एकस्यैव सतीव्रस्य, दिशति फलं सैव मन्दमन्यस्य । भवति सहकारिणामपि, हिंसा वैचित्र्यमत्र फलकाले ॥ ३ ॥

'एकस्यैव सतीव्रस्येति०'। एकस्य प्राणिनः सैव हिंसा प्राणपरित्यागेन रौद्रध्यानानुवशगा पीडा तथाविधदुष्टाध्यवसायविशेषात् द्वारिकायां धन्वन्तरिवैतरणीवैद्यवत् देवनरकातिर्यक्त्वानन्तरमोक्षं नरकादि च मन्दं-मन्दफलञ्च ददाति, एवं सहायदातॄणां सहायिनां हिंसाया वैचित्र्यात् तथाविधाध्यवसायतीव्रतीव्रतरमन्दमन्दतरपीडोत्पादनन्यूनान्यूनादिफलसापेक्षत्वेन फलस्य वैचित्र्यं प्राणिनो भवति, यथा द्वयो राज्ञोः सहायिनां भटानां रौद्रध्यानस्य बलाबलत्वेन वरुणनागताधिंसकादीनामिव भिन्नाभिन्नफलं स्वर्गनरकादितिर्यक्त्वादि फलं दत्ते इति प्रथमभंग्यां परिणामवैचित्र्यं निरूपितम् ॥ ३ ॥

**प्रागेव फलति हिंसा (१), क्रियमाणा फलति (२) फलति च कृतार्था (३)। आरब्धा चाप्यकृता, (४) फलति हिंसाऽनुभावेन ॥४॥**

'प्रागेवेति०-' रौद्रध्यानानुबन्धिकठिनहृदयजन्यतीव्रतीव्रतरसंक्लिष्टाध्यवसायवशेन बहुत्रसजीवानां प्राणत्यागरूपा हिंसा प्रागेव इहैव फलति, षट्खण्डसिसाधयिषोद्यतगुफादेवध्वंसितकोणिकवत् नरकफलपूर्वभावि मरणं फलितं (१) अन्यस्य क्रियमाणा-सम्प्रतीना हिंसा साम्प्रतीनं फलं दत्ते, सुन्देनोपसुन्दो हतः, उपसुन्देन सुन्दो हत (इति) वत् (२), कालान्तरे कृता हिंसा कालान्तरे फलति, यथा केनचिन्मारितः तस्य भ्रातृपुत्रादिना वैरनिर्यातनं कृतमिति (३), आरब्धा हन्तुमुद्यतत्वादप्राणत्यागादकृता हिंसा हिंसानुभावेन दुष्टफलेन फलति, श्रीमहावीरमुत्पाट्य मारितुं धावन् दुष्टाध्यवसायेन पीडां कर्तुमना लोहकारः, परभवे च दुःखभागपि, एवं परभवापेक्षया परिणामवैचित्र्यम् (४) ॥४॥

**एकः करोति हिंसां, भवन्ति फलभोगिनस्तथा बहवः। बहवो विदधति हिंसां, हिंसाफलभुग् भवत्येकः ॥ ५ ॥**

'एक इति ०-'। एकः-कश्चिद्धिंसां करोति तत्फलभोक्तारो बहवो जीवाः, पालकवद् बहुजनाः दुःखभाजः, तथा बहवो जना हिंसां कुर्वति, तत्फलभागेकः-राजा परत्र नरकादिदुःखमनुभवति, 'राजा राष्ट्रकृतं पापं, राजपापं पुरोहितः। भर्ता च स्त्रीकृतं पाप' मिति लोकोक्तेः। एवं बहुभिः कृता हिंसा साम्बप्रद्युम्नादिकुमरवत् द्वीपायनवधवत् बहवो भोक्तारश्च, एकः हिंसां करोत्येक एव भुनक्तीति गाथार्थः ॥५॥

**कस्यापि दिशति हिंसा, हिंसाफलमेकमेव फलकाले। अन्यस्य सैव हिंसा, दिशत्यहिंसाफलं विपुलम् ॥ ३ ॥**

'कस्यापि दिशति हिंसेति०-'। कस्यचिज्जीवस्यैकवारकृता हिंसा तथाध्यवसायादेकवारमेव फलं दत्ते, यथा पूर्वभवे श्रीवीरेण शय्यापालकहिंसाफलमेकशः भुक्तम्, इदं तूपलक्षणं, यथा- एकवारकृता हिंसा कोटिशः फलमुदेति, 'कोडाकोडिगुणो वा हुज्ज विवागो बहुतरो वे-' ति वचनात्, अध्यवसायविशेषाद्वा मन्तव्यं, अन्यस्य कस्यचिज्जीवस्य सुकुमारहृदयत्वेनाकुट्टिप्रमादरहितस्य रौद्रध्यानानभिष्वङ्गतया दुष्टाध्यवसायाभावनिर्मिता प्राणत्यागजन्यपीडारूपा हिंसाऽपि सुमङ्गलविष्णुकुमारादीनामिवार्हत्संघप्रत्यनीकतानिवारणकारणद्वारा विशेषबोधिबीजावाप्ति-

लक्षणमहानिर्जरारूपाहिंसाफलं ददाति,'जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स । सा होइ निज्जरफला अज्झत्थविसोहिजुत्तस्स'॥१॥६॥

**हिंसाफलमपरस्य तु, ददात्यहिंसा फलं तु परिणामे । इतरस्य पुनर्हिंसा, दिशत्यहिंसाफलं नान्यत् ॥ ७ ॥**

' हिंसेति०- ' । अहिंसाशब्देनानुकम्पा दयेतियावत्, साऽपि द्रव्यतोऽनुकम्पा सत्यां शक्तौ दुःखप्रतीकारः भावतोऽनुकम्पा आर्द्रहृदयत्वेन(२) एवंविधाऽप्यहिंसा परिणामे-विपाककाले हिंसाफलं ददाति, यथा अभिनिवेशात् अभिष्वङ्गाच्च, निरभिष्वंगानुष्ठानमपि जमालिप्रमुखाणामनार्द्रहृदयत्वेन प्रमादाचरणवतां साभिष्वंगानुष्ठानफलं ददाति, बहुसंसारवृध्धिकरणाद् अपि, हिंसाफलं तथाविधचारित्रं, निष्फलमेवेति भावः । श्रीहेमचन्द्रपादैरुक्तं–' शरीरी म्रियतां मा वा-०' इति, इतरस्य समताभिष्वंगेण निरभिष्वंगानुष्ठानवतो हिंसाऽपि यतनापूर्वकोपयोगिनः अहिंसाफलं ददाति, नान्यत्–विपरीतफलं न ददातीत्यर्थः. उक्तञ्च–' सा प्राणव्यपरोपेऽपि०', उपशान्तमोहादिगुणस्थानत्रयवर्तिन इव ॥ ७ ॥

**इति विविधभंगगहने, सुदुस्तरे मार्गमूढदृष्टीनाम् । गुरवो भवन्तु शरणं, प्रबुध्धनयचक्रसंचाराः ॥ ८ ॥**

' इति विविधेति०- ' । द्रव्यभावाभ्यां दया नास्ति, अंगारमर्दकाचार्यवत् (१) द्रव्यदया नास्ति, इत्यमुना प्रकारेण विविधा-नाना भंगा यस्मिंस्तद् विविधभङ्गं च तद् गहनं–वनञ्चेति विविधभंगगहनं तस्मिन्, किंभूते?-मार्गमूढदृष्टीनाम्-अज्ञातमार्गाविपयाणां दुस्तरे–गन्तुं न शक्यते यत्र तत्र गुरव एव शरणं, गृणान्ति–हितं-मार्गामार्गमुपदिशन्ति ते गुरवः इति व्युत्पत्तेः, त एव शरणं नान्यः, तस्मिन् गहने-भीपणे मूढकर्तव्यताके, किंभूता गुरवः?-प्रबुध्धो-ज्ञातो नयचक्रस्य–सप्तनयलक्षणमार्गस्य प्रवृत्तिलक्षणः संचारः– प्रसरणव्यापारो यैस्ते प्रबुध्धनयचक्रसंचाराः ॥ ८ ॥

इति श्रीहिंसाष्टकावचूरिर्मुख्यतश्चतुर्भंगीभावनभेदव्याख्यानेन कृता श्रीहरिभद्रसूरिभिः । सं १८८६ श्रावणमासे कृष्णपक्षे द्वादशीतिथौ कुजवासरे ले०-जीवणविजयजीगाणेः । इति तत्त्वतः श्रीहरिभद्रसूरिभिर्विरचितं हिंसाष्टकप्रकरणं समाप्तमिदम् ॥

# अथ प्रशस्ति.

श्रीमहावीरस्वामीने नमस्कार थाओ, श्रेष्ठथी पण श्रेष्ठ एवा श्रीपार्श्वनाथस्वामीने नमस्कार थाओ, श्रीसरस्वती देवीने नमस्कार थाओ, उत्तम कविओनी सभाने पण नमस्कार थाओ, श्रीसंघने नमस्कार थाओ, प्रगट गुणवाळा गुरुने पण नमस्कार थाओ, तथा आ प्रकृत विधिमां सहाय करनार सर्वने नमस्कार थाओ ॥ १ ॥

अहो ! वचनना समुद्ररूप जे उत्तम ग्रंथनुं प्रमाण प्रथम एक लाख ने चुमाळीश हजार पदोनुं हतुं, ते कालादिकना दोषथी चुलुकनी आकृतिने पामेल तथा दुर्लेखने लीधे क्षीणताने पामेल आ ग्रंथ नानो थइ गयो छे तेमां मारी जेवा अल्पबुद्धि-वाळा शुं करी शके ? ॥ २ ॥

तोपण पोताना आत्माने अति कष्टमां नांखीने मने कोइक दिवस अधिक कष्ट न थाओ अने आनुं विवेचन करनारा बीजा अल्पज्ञानवाळाने आना व्याख्यानमां अधिक कष्ट न थाओ, एम विचारीने में आमां कांइक व्याख्यान कर्युं छे. तेमां कांइ दोषवाळुं व्याख्यान थयुं होय तो तेनी परोपकारमां उद्यमवाळा डाह्या पुरुषोए शुद्धि करवी ॥ ३ ॥

सर्वज्ञनुं वचन होवाथी आ वचन( सूत्र )मां कांइपण विरोध छे ज नहीं, तो पण कोइ ठेकाणे कांइ पण ते ( विरोध )नो आभास थाय तो ते मनुष्यनी बुद्धिनी मंदताने लीधे, उत्तम गुरुना विरहने लीधे, अथवा अतीत काळे मुनीश्वरोए गणधरना वचनोना समूहनो फेरफार करेलो होवाथी जाणवो ॥ ४ ॥

जो के आ व्याख्यान ( टीका ) उत्तम कविओना वचननी परतंत्रतावडे में कर्युं छे, तोपण आमां कोइ ठेकाणे मन-( मति )ना मोहने लीधे अर्थादिकनो भेद ( दोप ) संभवे छे, परंतु श्रीसंघनी बुद्धिने अनुसरवानी विधिथी अने भावनी शुद्धिथी मारो अल्प दोप पण न हो, आ बाबतमां श्रुतदेवता मारा पर प्रसन्न मनवाळा हो ॥ ५ ॥

निःस्पृहपणे विहार करवाथी मनोहर चारित्रवाळा श्रीवर्धमान नामना सूरिनुं ध्यान करता, अति तीव्र तप करनार अने ग्रंथनी रचना करवामां प्रभु जेवा श्रीमान् जिनेश्वरसूरि तथा तेना बंधु, दर्पवाळा वाचाळ जनोने जीतनारा अने पृथ्वी पर प्रसिद्धिने पामेला श्रीबुद्धिसागर नामना सूरि थया हता ॥ ६ ॥

तेमना शिष्य श्रीअभयदेव सूरिए श्रीसमवाय नामना आ चोथा अंगनी संक्षेपथी टीका करी छे ॥ ७ ॥

आ समवायांगनी टीका विक्रम संवत अग्यार सो ने वीश( ११२० )नी सालमां अणहिलपाटक नामना नगरमां रची छे ॥ ८ ॥

आ टीकाना दरेक अक्षर गणीने एनुं प्रमाण त्रण हजार अने पोणा छ सो ( ३५७५ ) श्लोक जेटलुं निश्चय कर्युं छे ॥९॥

॥ सूत्र संख्या श्लोक १६६७ अने टीका ३५७५ । बन्ने मळीने ५२४२ श्लोक छे. ॥

इति चंद्रकुळरूपी आकाशमां सूर्यसमान श्रीअभयदेव आचार्ये रचेली समवायांग सूत्रनी टीका, टीकानो अर्थ, मूळ ने मूळनो अर्थ समाप्त ॥

## सभा तरफथी प्रगट थयेला (११) सूत्रो.

न्यायाचार्य-न्यायविशारद-महोपाध्याय-श्रीमद्यशोविजयविहिता ऐन्द्रस्तुतयः

## ॥ अथ श्रीऋषभदेवस्तुतिः १ ॥ म्सौ ज्सौ तौ गः शार्दूलविक्रीडितं छंः ।

ऐन्द्रव्रातनतो यथार्थवचनः प्रध्वस्तदोषो जगत्, सद्यो गीतमहोदयः शमऽवतां राज्याधिकाराजितः । आद्यस्तीर्थकृतां करोत्विह गुणश्रेणीर्दधन्नाभिभूः, सद्योगीतमहोदयः शमवतां राज्याऽधिकाराजितः ॥ १ ॥ उद्भूतानतिरोधबोधकलितत्रैलोक्यभावव्रजास्तीर्थेशस्तरसा महोदितभयाऽक्रान्ताः सदाशापदम् । पुष्णंतु स्मरनिर्जयप्रसृमरप्रौढप्रतापप्रथास्तीर्थे शस्तरसा महोदितभयाः कान्ता सदा शापदम् ॥ २ ॥ जैनेन्द्रं स्मरतातिविस्तरनयं निर्माय मिथ्यादृशां, सगत्यागमभङ्गमानसहितं हृद्यप्रभावि श्रुतम् । मिथ्यात्वं हरदूर्जितं शुचिकृथं पूर्णं पदानां मिथः, संगत्या गमभङ्गमानसहितं हृद्यप्रभा! विश्रुतम् ॥ ३ ॥ या जाड्यं हरते स्मृताऽपि भगवत्यम्भोरुहे विस्फुरत्सौभाग्या श्रयतां हिता निदधती पुण्यप्रभाविक्रमौ । वाग्देवी वितनोतु वो जिनमतं प्रोल्लासयंती सदा, सौभाग्याऽऽश्रयतां हितानि दधती पुण्यप्रभावि क्रमौ ॥ ४ ॥

नत्वा नम्रसुराधीशश्रेणिं सर्वार्थसाधकम् । जिनं जिनस्तुतीर्न्यायाचार्यीया विवृणोम्यहम् ॥ १ ॥ महत्यनेकार्थसिद्धिप्रत्यला विवृतिः कृता । तासां तैरेव न तथा, तथापि वाचनक्षमा ॥२॥ तामेवालम्ब्य संक्षेपात्, अवचूर्णिरियं मुदा । तदर्थबोधनायाशु, क्रियते जिनभक्तितः ॥३॥ ऐन्द्रेति, जगद्वतां तीर्थकृतामाद्यो नाभिभूः सद्यः शं करोतु, किंविशिष्टः? ऐन्द्रव्रातनतः यथार्थवचनः, यथार्थमबाधितं वचनमुपदेशः, प्रध्वस्त-

दोष:, प्रकर्षोऽपुनर्भाव:, दोषा रागादय:, शमवतां राज्या गीतमहोदय:, राजी श्रेणि:, महोदय: ज्ञानाद्यतिशय: महोदये वा कान्तिकरुणे, राज्याधिकारै: राज्याधिकारया वाऽजित:, अधिका गुणश्रेणीर्दधत् सयोगी इतमहोदय:, महोदयो मोक्ष:, राजित: अधिकाऽऽगाजितो वा ॥ १ ॥

उद्भूतेत्यादि, उद्भूतानतिरोधबोधकलितत्रैलोक्यभावव्रजा:-आविर्भूतो योऽनावरणो बोधस्तेन दृष्टस्त्रिलोकीगतपदार्थसमूहो यै:, अकान्ता:-दु:खान्तकरा दारवर्जिता वा, स्मरनिर्जयप्रसृमरप्रौढप्रतापप्रथा:- कामस्य जयेन विस्तरन्ती महाप्रतापप्रथा येषां, शस्तरसा:-प्रशस्त: शान्तो रसो येषां, महोदितभया-महत्या उदितया च कान्त्या कान्ता-मनोहरा:, महोदितभया:- प्रभावेन खण्डितं भयं यै:, तीर्थेशा:- जिनेश्वरा:, तरसा-वेगेन सदा शापदं--शापखण्डकं सदाशापदं-शुद्धमनोरथास्पदं पुष्णन्तु ॥ २ ॥

जैनेन्द्रमित्यादि, हे हृद्यप्रभा:!- मनोहरकान्तिमन्त: मिथ्यादृशां सङ्गत्यागं- संसर्गपरिहारं निर्माय अप्रभावि मिथ्यात्वं हरद् अतिविस्तरनयं अभङ्गमानसहितं, मान: सत्कार:, ऊर्जितं शुचिकथं मिथ: पदानां संगत्या-समापत्त्यादिना पूर्णं गमभङ्गमानसहितं-सदृक्पाठसप्तभङ्गीप्रत्यक्षपरोक्षप्रमाणयुक्तं विश्रुतं-प्रसिद्धं जैनेंद्रं श्रुतं हृदि स्मरत ॥ ३ ॥

या जाड्यमित्यादि, या स्मृताऽपि जाड्य हरते, पुण्यप्रभावि जैनमतं प्रोल्लासयन्ती, भगवत्यम्भोरुहे पुण्यप्रभाविक्रमौ-पवित्रकान्तिपराक्रमवन्तौ क्रमौ-पादौ निदधती-स्थापयन्ती, श्रयतां हिता, भाग्याश्रयतां दधती विस्फुरत्सौभाग्या असौ-एतादृशी वाग्देवी व: सदा हितानि वितनोतु । इति ऋषभजिनस्तुतय: ।

## ॥ अथ श्रीअजितस्तुति: २ ॥ नारलगा नजज्रा अपरवक्त्रं । गान्तं पुष्पिताग्रा ।

मुनिततिरपि यं न सय(शीर्ण)मोहा शमजितमारमदं भवन्दिताऽऽपत् । भज तमिह जयंतमाप्तुमाशि, शमजितमारमदंभवन्! दिता-

पत् ॥ १ ॥ नियतमुपगता भवे लभन्ते, परमतमोहर! यं भयानि दानम् । हर रुचिर! ददज्जिनौघ! तं द्राक् परमतमोहरयं भया-ऽनिदानम् ॥२॥ नयगहनमतिस्फुटानुयोगं, जिनमतमुद्यतमानसा! धुतारम् । जननभयजिहासया निरस्ताजि नमतमुद्यतमानसाधुतारम् ॥३॥ पविमपि दधतीह मानसीन्द्रैर्महितमदं भवतां महाधिकारम् । दलयतु निवहे सुराङ्गनानामहितमदं भवतां महाऽऽधिकाऽरम् ॥४॥

मुनिततिरित्यादि, अदम्भवन्! भवन्दिता, भं नक्षत्रं, दितापद्-खण्डिततदुःखा शीर्णमोहा मुनिततिरपि यं नापत् इह तं आरं-अरिसमूहं जयन्तं शमजितमारमदं ईशं अजितं शं आप्तुं भज ॥१॥ नियतमित्यादि, हे परमतमोहर! भया रुचिर! भा-कान्तिः, दानं ददत्! जिनौघ! यं परमतमोहरयं-शाक्यादिमतमूढताप्रावल्यं उपगता भवे भयानि नियतं लभन्ते तं अनिदानं द्राक् हर ॥ २ ॥ नयेत्यादि, हे उद्यतमानसाः! नयगहनं अतिस्फुटानुयोगं धुतारं-कम्पितारिसमूहं मुद्यतमानसाधुतारं—हर्षेण प्रवर्त्तमानानां साधूनां तारकं निरस्ताऽऽजि-रणनिवारकं जिनमतं जननभयजिहासया, जिहासा-हातुमिच्छा, नमत ॥ ३ ॥ पविमित्यादि, इह इन्द्रमहितं पविं सुराङ्गनानां निवहे महा-धिकारमपि दधती मानसी अदम्भवतां भव.ां महाधिकारं आधिः- मानसी व्यथा, अहितमदं दलयतु ॥ ४ ॥ इति श्रीअजितनाथस्तुतयः ।

## ॥ अथ श्रीसम्भवस्तुतिः ३ ॥ चेऽष्टमे स्कनकम् ।

सम्भव! सुखं ददत्त्वं भाविनि भावारवारवारण! विश्वम् । वासवसमूहमहिताऽभाविनिभाऽराऽरवारवाऽरण ! विश्वम् ॥ १ ॥ यद्धर्म्मः शं भविनां संततमुदितोदितोऽदितोदारकरः । स जयतु सार्वगणः शुचिसंततमुदितोऽदितोदितोऽदारकरः ॥२॥ जैनी गीः सा जयतान्न यया शमितामिता मिताक्षररुच्या । किं सन्तः समवतरन्नयया शमिताऽमिताऽमिताऽक्षररुच्या? ॥ ३ ॥ दल-

यतु कांचनकांतिर्जनतामहिता हिता हि तारागमदा । इह वज्रशृङ्खला दुर्जनतामहिताऽऽहिताऽहिता रागमदा ॥ ४ ॥

सम्भवेत्यादि, हे भावारवरवारण- भावारिसमूहचक्रनिवारक, अवारव-मूकानां वाग्हेतो! अरण! अभाविनिभ! निर्भ-कपटं, वासव-समूहमहित! वासवा-इन्द्राः, शम्भव! त्वं भाविनि-शुभभावयुक्ते सुखं ददत् विश्वं-समग्रं विश्वं अव-रक्ष॥१॥ यद्धर्मे इत्यादि, यद्धर्मः भविनां शं अदित स सततमुदितोदितः अदारकरः दाराः-स्त्रियः करो-दण्डः, शुचिसंततमुदितः अदितः- अखण्डितः अदितोदारकरः अखण्डवांछितदानात् सार्व-गणः- तीर्थंकरसमूहो जयतु ॥२॥ जैनीत्यादि, यया मिताक्षररुच्या समधतरत्नत्रयया सन्तः शमिताऽमिताऽमिताक्षररुच्या-क्षपितापरिमाणरोगिता-रूपमोक्षरुच्या किं न शमितां इताः?, सा जैनी गीः जयतात् ॥ ३ ॥ दलयत्वित्यादि, इह काञ्चनकान्तिः हिता तारागमदा तारः-उज्ज्वलः, अहिताहिताहिता रागमदा-शत्रुषु अहितकारका रागमदवर्जिता च जनतामहिता जनता-जनसमूहः वज्रश्रृंखला हि दुर्जनतां दलयतु ॥ ४ ॥
॥ इति संभवजिनस्तुतयः ॥

## ॥ अथ अभिनन्दनस्तुतिः ४ ॥ नभभ्रा द्रुतविलम्बितम् ।

त्वमभिनन्दन! दिव्यगिरा निराकृतसभाजनसाध्वस! हारिभिः । अहतधैर्य! गुणैर्जय राजितः, कृतसभाजन! साध्वसहारि-भिः ॥ १ ॥ भगवतां जननस्य जयन्निहाऽऽशु भवतां तनुतां परमुत्करः । त्रिजगतीदुरितोपशमे पटुः शुभवतां तनुतां परमुत्करः ॥ २ ॥ त्रिदिवमिच्छति यः चतुरः स्फुरत्सुरसमूहमयं मतमर्हताम् । स्मरतु चारु ददत्पदमुच्चकैः, सुरसमूहमयं मतमर्हताम् ॥ ३ ॥ धृतसकांडधनुर्धृतु तेजसा, न रहिता सदया रुचिराजिता । मदाहितानि परैरिह रोहिणी, नरहिता सदया रुचिराऽजिता ॥ ४ ॥

त्वमभीत्यादि, दिव्यागिरा निराकृतसभाजनसाध्वस!-खण्डितपर्षद्भय कृतसभाजन! सभाजनं-सत्कारः साध्वसहारिभिः-मुनिदुःसहरिपुभिः अहतधैर्य! अभिनन्दन! हारिभिर्गुणै राजितस्त्वं जय ॥१॥ भगवेत्यादि, इह परमुत्करः मुद्-हर्षः त्रिजगतीदुरितोपशमे पटुःपरं-मोक्षं जनयन् भगवतां उत्करः- समूहः शुभवतां भवतां जननस्य तनुतां-अल्पतां तनुतां ॥ २ ॥ त्रिदिवेत्यादि, यः चतुरः स्फुरत्सुरसमूहमयं त्रिदिवं-सुरलोकमिच्छति, स इत्यस्य गम्यता, चारु सुरसं ऊहमयं ऊहः-तर्कः, अर्हतां मतं-अभीष्टं उच्चकैः पदं ददत् अर्हतां मतं-प्रवचनं स्मरतु ॥३॥ धृतेत्यादि, इह सकाण्डधनुः काण्डं-इषुः तेजसा न रहिता युक्तत्वात् सदया रुचिराजिता रुचिः-कान्तिः रुचिरा परैः अजिता सदया अयं-इष्टं दैवं नरहिता रोहिणी मदहितानि-ममाशुभानियतु-खण्डयतु ॥४॥ इत्यभिनन्दनजिनवरस्तुतयः ॥

## ॥ अथ सुमतिनाथस्तुतिः ॥ चेऽष्टमे स्कन्धकम् ।

नम नमदमरसदमरससुमतिं सुमतिं सदसदरमुदारमुदा । जनिताऽजनितापदपदविभवं विभवं नरकांतं नर! कांतम् ॥ १ ॥ भवभवभयदाऽभयदावली वलीयोदयोदयाऽमायामा। दयादया ऽमितमितशमा शमादिष्टदिष्टबीजाऽबीजा ॥ २ ॥ दमदमसुगमं सुगमं सदा सदानन्दनं दयाविद्याविद्। परमपरमस्मर' स्मर महामहा धीरधीर! समयं समयम् ॥ ३ ॥ काली कालीरसरसभावाभावाय नयनसुखदाऽसुखदा । महिमहितनुता तनुतादिताऽदिताऽमानमानरुच्या रुच्या ॥ ४ ॥

नमेत्यादि, नर ! नमदमरसदमरससुमतिं-नमत्सुरं दमरसयुतं सन्मतिं, सदसदरं-सन्तं भयमुक्तं च जनिताऽजनितापदपदविभवं-कृतः अजन्मकुः नप्रदस्य पदस्य विभवो येन तं विभवं-भवमुक्तं नरकान्तं-नरकनाशकं कान्तं-मनोहरं सुमतिं उदारमुदा मुद्-हर्षः भज॥१॥

भवेत्यादि, वलीयोदयोदया-प्रकृष्टदयोदयवती अमायामा-अप्रपञ्चा रोगरहिता च इतशमा-प्राप्तप्रशमा आदिष्टदिष्टबीजा दिष्टं-भाग्यं अबीजा बीजं-कर्म भवभवभयदा-सांसारिकभयखण्डिका अभयदावली-जिनावली अद्य-अमितं शं दद्यात् ॥२॥ दमेत्यादि, अस्मर !- साधो ! दयाविद्याविद्-दयाप्रधानागमज्ञात:! धीरधीर-प्रकृष्टधीर ! महामहा: सन्नितिशेषः दमदं असुगमं-दुष्प्रापं सुगमं-सुष्ठुसद्दक्पाठं सदानन्दनं-सतामानन्दकारि परं अपरं-अनन्यं समयं-इष्टभाग्यहेतुं समयं सदा स्मर ॥ ३ ॥ कालीत्यादि, नयनसुखदा असुखदा-दु:खनाशिनी महिमहितनुता महिमा-प्रभावः इत्तादितामानमानरुच्या-प्राज्ञाखण्डितामितसत्काररम्या रुच्या काली असरसभावाभावाय असरस:-विरस: काली:-सुखाली: तनुतात् ॥ ४ ॥ इति सुमतिजिनस्तुतयः ५ ।

## ॥ अथ श्रीपद्मप्रभस्तुतिः ॥ त्भौ जौ गौ वसन्ततिलका ।

पद्मप्रभेश! तव यस्य रुचिर्मते सद्विश्वासमानसदयापर! भावि तस्य । नोच्चैः पदं किमु पचेलिमपुण्यसम्पद्, विश्वाऽसमान ! सदयाऽपर! भावितस्य ॥ १ ॥ मूर्तिः शमस्य दधती किमु या पटूनि, पुण्यानि काचन सभासु रराज नव्या । सा स्तूयतां भगवतां विततिः स्वभक्त्या, पुण्याऽनिकाचन! सभासुरराजनव्या ॥ २ ॥ लिप्सुः पदं परिगतैर्विनयेन जैनीं, वाचंयमैः संततमंचतु रोचितार्थाम् । स्याद्वादमुद्रितकुतीर्थनयावतारां, वाचं यमैः सततमं चतुरोचितार्थाम् ॥ ३ ॥ साहाय्यमत्र कुरुषे शिवसाधने याऽपाता मुदा रसमयस्य निरन्तराये ! । गान्धारि! वज्रमुशले जगतीं तवास्याः, पातामुदारसमयस्य निरन्तराये ॥ ४ ॥

पद्मेत्यादि, पद्मप्रभेश ! सद्विश्वासमानसदयापर ! विश्वाऽसमान ! सदय ! अपर ! यस्य तव मते रुचिः तस्य भावितस्य पचेलिमपुण्यसंपत्

पचेलिमा-उत्कृष्टा उच्चैः पदं किमु न भावि ? ॥ १ ॥ मूर्तिरित्यादि, अनिकाचन !- कर्मनिकाचनरहित ! या पद्मानि पुण्यानि दधती पुण्या सभासुरराजनव्या भासुरा-दीप्ता किमु काचन-अनिर्वाच्या शमस्य मूर्तिः नव्या-स्तुत्या सभासु रराज सा भगवतां विततिः-श्रेणिः स्वभक्त्या स्तूयताम ॥ २ ॥ लिप्सुरित्यादि, सततमं-विस्तृतलक्ष्मीयुतं पदं लिप्सुः यमैः परिगतैः-आश्रितैः वाचंयमैः रोचितार्थां चतुरोचितार्थां स्याद्वादमुद्रितकुतीर्थनयावतारां जैनीं वाचं सततमञ्चतु ॥३॥ साहेत्यादि, हे गान्धारि! निरन्तराये! आयो-लाभः या अपाता पातः-पतनं रसमयस्य उदारसमयस्य अत्र निरन्तराये शिवसाधने मुदा साहाय्यं कुरुपे अस्यास्तव वज्रमुशले जगतीं अपाताम् ॥ ४ ॥ इति पद्मप्रभस्तुतयः ६॥

## ॥ अथ श्रीसुपार्श्वजिनस्तुतिः ॥ न्नौ म्यौ यो मालिनी ।

यदिह जिन ! सुपार्श्व! त्वं निरस्ताकृतक्ष्मावनमद् ! सुरवाऽधा हृद्यशोभाऽवतारम् । तत उदितमजस्रं कैर्बुधैर्गीयते नावनमदसुरबाधाहृद्यशो भावतारम् ॥ १ ॥ जगति शिवसुखं ये कान्तिभिर्भासयन्तोऽदुरितमदरतापध्यानकान्ताः सदाऽऽशाः । जिनवरवृपभास्ते नाशयंतु प्रवृद्धं, दुरितमदरतापध्यानकान्ताः सदाशाः॥ २ ॥ मुनिततिरपठद् यं वर्जयंती हतोद्यत्तमसमहितदाऽत्रासाऽऽधिमानन्दितारम् । समयमिह भजास्तेनोक्तमुच्चैर्दधानं, तमसम ! हितदात्रा साधिमानं दितारम् ॥३॥ अत्रतु करिणि याता साऽर्हतां प्रौढभक्त्या, मुदितमकलितापा या महामानसीमाम् । वहति युधि निहत्यानीकचक्रं रिपूणामुदितमकलितापाया महामानसी माम्॥४॥

यदिहेत्यादि, इह जिन! सुपार्श्व! सुरव! निरस्ताकृतक्ष्मावनमद-अकृतक्षमारक्षणमदनिराकर्त्तः! अवनमदसुरबाधाहृद्! हृद्यशोभ! त्वमवतारं यद् अधाःतत उदितं यशःकैर्बुधैः अजस्रं-नित्यं भावतारं-भावोज्ज्वलं न गीयते?॥१॥ जगतीत्यादि, ये कान्तिभिः सदा आशाः-दिशः भासयन्तो

जगति शिवसुखं अदुः ते इतमदरतापध्यानकान्ताः-मदादिरहिताः अदरतापध्यानकान्ताः-अदरतापं यद् ध्यानं तेन मनोहराः सदाशाः-प्रशस्ताभिलापहेतवः जिनवरवृषभाः प्रवृद्धं दुरितं नाशयंतु॥२॥ मुनिवेत्यादि, असम! असमान! हितदात्रा आप्तेनोक्तं उच्चैः साधिमानं-साधकतां दधानं वितारं-खण्डितरिपुवृन्दं आनन्दितारं हतोद्यत्तमसं यं समयमिह अहितदा दानं-खण्डनं अत्रासा आधिं वर्जयन्ती मुनिततिरपठत् तं भज ॥३॥ अवेत्यादि, या महामानसी करिणि यावा-स्थिता अकलितापा कलिः-क्लेशः युधि रिपूणामुदितमनीकचक्रं निहत्य अकलिताऽपाया महामानसीमां सीमा-मर्यादा वहति साऽर्हतां प्रौढभक्त्या मुदितं मां अवतु ॥ ४ ॥ इति सुपार्श्वजिनस्तुतयः ७ ॥

## ॥ अथ श्री चन्द्रप्रभुस्तुतिः ॥ मो भ्नौ तौ गौ मन्दाक्रान्ताघचैः ॥

तुभ्यं चन्द्रप्रभ! भवभयाद्रक्षते लेखलेखानंतव्याऽपापमदमहते सन्नमोऽहासमाय! । श्रेयःश्रेणीं भृशमसुमतां तन्वते ध्वस्तकामानंतव्यापाऽपमद! महते सन्नमोहाऽसमाय ॥१॥ श्रेयो दत्तां चरणविलुठन्नम्रभूपालभूयोमुक्तामाला समदमहिता बोधिदानामहीना। मोहापोहादुदितपरमज्योतिषां कृत्स्नदोषैर्मुक्ता मालाऽसमदमहिता बोधिदानाऽऽमहीना ॥ २ ॥ रंगद्भङ्गः स्फुटनयमयस्तीर्थनाथेन चूलामालापीनः शमदमवताऽसंगतोपायहृद्यः । सिद्धान्तोऽयं भवतु गदितः श्रेयसे भक्तिभाजामालापी नः शमदमवता संगतोऽपायहृद् यः॥३॥ सा त्वं वज्रांकुशि! जय मुनौ भूरिभक्तिः सुसिद्धप्राणायामेऽशुचि मतिमतापाऽऽपदंताऽबलानाम् । दत्से वज्रांकुशभृदनिशं दर्पहंत्री मदत्तप्राणाया मे शुचिमतिमता पापदंताबलानाम् ॥ ४ ॥

तुभ्यमित्यादि, हे सन् चन्द्रप्रभ! अहासमाय! हासो-हास्यं ध्वस्तकामानन्तव्याप! अपमद! सन्नमोह! लेखलेखानन्तव्य-देवश्रेणिनमस्कार्य!

अपापमदमहते-पापमदापगमान्महस्ववते भवभयाद् रक्षते असुमतां भृशं श्रेयःश्रेणिं तन्वते महते असमाय इद्दशाय तुभ्यं नमः, अस्त्विति शेषः || १ || श्रेयइत्यादि, मोहापोहात् अपोहः-अपगमः उदितपरमज्योतिषां-प्रादुर्भूतकैवल्यानां बोधिदानां अहीना कृत्स्नदोषैर्मुक्ता असमदमहिता-यतिपूजिता, अधिदाना-अधिकदाना आमहीना आमो-रोगः चरणविलुठन्नम्रभूपालभूयोमुक्तामाला भूयस्यो-वह्न्यः समदमहिता, दमः-इन्द्रियादि-जयः, माला वः श्रेयो दत्ताम्||२|| रङ्गेत्यादि, यः रङ्गद्भङ्गः भङ्गाः-स्यादस्तीत्याद्या द्रव्यभावाद्या वा स्फुटनयमयः चूलामालापीनः चूलाः-चूलिका दशवैकालिकादेरिव पीनः- पुष्टः असंगतोपायहृद्यः असङ्गता-निर्लेपता आलापी आलापकवान् संगतः-पूर्वापरबाधशून्यः अपायहृद् सिद्धान्तः शमदं अवता शमदमवता तीर्थनाथेन गदितः अयं भक्तिभाजां श्रेयसे भवतु||३|| सेत्यादि, हे वज्राङ्कुशि! या त्वं सुसिद्धप्राणायामे प्राणायामः-श्वासप्रश्वासरोधः अशुचि शुच्-शोकः मुनौ भूरिभक्तिः अतापा आपदन्ता-दुःखनाशिनी पापदन्तावलानां दन्तावलाः- हस्तिनः दर्पहन्त्री अव-लानां प्रदत्तप्राणा प्राणो-बलं शुचिमतिमता-सुबुद्धिभिर्मता वज्राङ्कुशभृत् मे अनिशं मतिं दत्से सा जय || ४ || इति चन्द्रप्रभस्तुतयः ८ ||

## || अथ श्रीसुविधिजिनस्तुतिः ||

### तौ जौ गाविन्द्रवज्रा, जतजा गावुपेन्द्रवज्रा । एतयोः परयोश्च संकर उपजातिः ।

यस्यातनोद्देवततिर्महं सुप्रभावतारे शुचि मन्दरागे । इहास्तु भक्तिः सुविधौ दृढा मे, प्रभावतारे शुचिमन्दरागे || १ || अभूत् प्रकृष्टोपशमेषु येषु, न मोहसेना जनिताऽऽपदेभ्यः । युष्मभ्यमाप्ता प्रथितोदयेभ्यो, नमोऽर्हसेना ! जनितापदेभ्यः ||२|| वाणी रहस्यं दधती प्रदत्तमहोदयाऽवद्भिरनीति हारि । जीयाज्जिनेन्द्रैर्गदिता त्रिलोकीमहो दयावद्भिरनीतिहारि || ३ || जगद्गतिर्विद्रुमकान्त-

कान्तिः, करोऽतुलाभं शमदंभवत्याः । ददन्नतानां ज्वलनायुधे! नः, करोतु लाभं शमदं भवत्याः ॥ ४ ॥

यस्येत्यादि, सुप्रभ ! यस्य अवतारे देवततिः मन्दरागे-मेरौ शुचिमहं अतनोत् इह प्रभावतारे-महिमोज्ज्वले, शुचिमन्दरागे छाद्मस्थ्येऽपि, सुविधौ दृढा मे भक्तिरस्तु ॥ १ ॥ अभूदित्यादि, येषु प्रकृष्टोपशमेषु -जनितापत् मोहसेना नाम्नाऽभूत् अहसेनाः!-हास्यरहितानां स्वामिनः एभ्यो जनितापदेभ्यः-जन्मदुःखखण्डकेभ्यः प्रथितोदयेभ्यो युष्मभ्यं नमोऽस्त्विति शेषः ॥ २ ॥ वाणीत्यादि, अहो अनीतिहारि अनीति-अनुपद्रवं हारि-रम्यं रहस्यं दधती प्रदत्तमहोदया त्रिलोकीमवद्भिर्दयावद्भिर्जिनेन्द्रैः गदिता वाणी जीयात् ॥३॥ जगदित्यादि, हे ज्वलनायुधे ! अदम्भवत्या भवत्या विद्रुमकान्तकान्तिः जगद्धृतिः-विश्वाधारः नतानां शमदं शं ददत् करः अतुलाभं आभा-कान्तिः लाभं करोतु ॥ ४ ॥ इति सुविधिजिनस्तुतयः ९ ॥

## ॥ अथ श्रीशीतलस्तुतिः । नभभ्रा द्रुतविलम्बितम् ॥

जयति शीतलतीर्थपतिर्जने, वसु मती तरणाय महोदधौ । ददति यत्र भवे चरणग्रहे, वसुमतीतरणाय महो दधौ ॥ १ ॥ वितर शासनभक्तिमतां जिनावलि! तमोहरणे सुरसम्पदम् । अधरयच्छिवनाम महात्मनां, वलितमोहरणे सुरसं पदम् ॥ २ ॥ भगवतोऽभ्युदितं विनमागमं, जन! यतः परमापदमादरात् । इह निहत्य शिवं जगदुन्नतिं, जनयतः परमापदमादरात् ॥ ३ ॥ स्तवरवैस्त्रिदशैस्तव सन्ततं, न परमच्छवि! मानविलासिता! । न घनशास्त्रकलाऽप्यरिदारिणी, न परमच्छविमानविलासिता ॥ ४ ॥

जयतीत्यादि, यत्र चरणग्रहे भवे वसुं ददति अतीतरणाय महोदधौ तरणाय वसु महो दधौ (स) शीतलतीर्थपतिर्जने जयति ॥ १ ॥

वितरेत्यादि, हे जिनावलि! वलितमोहरणे वालितं--नाशितं तमोहरणे तमः-अज्ञानं सुरसंपदं अधरयत् शिवनाम सुरसं पदं शासनभक्तिमतां वितर ॥ २ ॥ भगवेत्यादि, हे जन! इह यतः परमापदमादरात् मा-लक्ष्मी आपो-व्याप्तिः दमादरौ-दान्तिनिर्भयत्वे आदरात् परमापदं निहत्य जगदुन्नतिं जनयतः भगवतोऽभ्युदितं शिवमागमं विनम ॥३॥ स्तवेत्यादि, हे परमच्छवि! छविः-त्वक् मानवि! स्तवरवैर्लिदशैस्तव संततमच्छविमानलासिता परं-केवलं न, किंतु अरिदारिणी घनशास्त्रकलापिन न लासिता ॥४॥ इति शीतलजिनस्तुतयः १० ॥

## ॥ अथ श्रेयांसस्तुतिः ॥ न्सौ म्रौ स्लौ गो हरिणी चयैः ॥

जिनवर! भजन् श्रेयांस! स्यां व्रतांबुहतोदयद्भवदव! नतोऽहं तापातंकमुक्त! महागम!। गतभववनभ्रान्तिश्रान्तिः फलेग्रहिरुल्लसद्भवदवनतो हन्ताऽपातं कमुक्तमहागमम् ॥ १ ॥ जिनसमुदयं विश्वाधारं हरन्तमिहाङ्गिनां, भवमदरदं रुच्याऽक्रान्तं महाग्नितमोहरम्। विनयमधिकं कारंकारं कुलादिविशिष्टताभवमदरदं रुच्या कान्तं महामितमोहरम् ॥ २ ॥ शुचिगमपदो भङ्गैः पूर्णो हरन् कुमतापहोऽनवरतमलोभावस्थामाश्रयन्नयशोऽभितः। जन! तव मनो यायाच्छायामयसमयो गलन्नवरतमलो भावस्थामाश्रयन्नयशोभितः ॥ ३ ॥ सुकृतपटुतां विघ्नोच्छित्त्या तवारिहतिक्षमाऽपविफलकरा शुत्याऽगेहा घनाघनराजिता। वितरतु महाकाली घंटाक्षसन्ततिविस्फुरत्पविफलकरा शुत्यागेहा घनाघनराऽजिता ॥ ४ ॥

जिनवरेत्यादि, जिनवर! श्रेयांस! व्रताम्बुहतोदयद्भवदव!- महाव्रतपानीयनाशितप्रादुर्भवद्भवदावानल! तापातङ्कमुक्त! महाऽऽगम! महाः-उत्सवाः उक्तमहागमं उल्लसद्भवदवनतः अवनं-रक्षणं गतभववनभ्रान्तिश्रान्तिः श्रान्तिः-परिश्रमः नतोऽहं अपातं कं भजन् हन्त फलेग्रहिः-

फलवान् स्याम् ॥ १ ॥ जिनेत्यादि, इहाङ्गिनां महाऽमितमोहरं राति-ददाति भवं हरन्तं अदरदं-अभयदं अकान्तं अकं-दुःखं तमोहरं रुच्या कान्तं कुलादिविशिष्टताभवमदरदं भवो-जातः रदनं-खण्डनं अधिकं विनयं कारंकारं-कृत्वाकृत्वा विश्वाधारं जिनसमुदयं महामि ॥ २ ॥ शुचिगेत्यादि, हे जन! शुचिगमपदो भङ्गैः पूर्णः कुमतापहोऽमितोऽयशो हरन् अनवरतं-सदा अलोभावस्थामाश्रयन् गलन्नवरतमलः-नवमैथुनमलरहितः भावस्थाम आश्रयन् नयशोभितः छायामयसमयः छाया-शोभा तव मनः यायात् ॥ ३ ॥ सुकृतेत्यादि, अरिहतिक्षमा हतिः-नाशः अगेहा अपविफलकरा-सफलहस्ता द्युत्या घनाघनराजिता-मेघवत् शोभिता घण्टाऽक्षसंततिविस्फुरत्पविफलकरा हस्तचतुष्के घण्टादिभावात्, घनाघनराऽजिता-निविडपापमनुजजेत्री द्युत्यागेहा द्यौः-दिवं महाकाली विघ्नोच्छिदया तव सुकृतपटुतां वितरतु ॥ ४ ॥ इति श्रेयांसस्तुतयः ११ ॥

## ॥ अथ श्रीवासुपूज्यस्तुतिः ॥ म्रौ भ्नौ यिः स्रग्धरा छन्दः ।

पद्मोल्लासे पटुत्वं दधदधिकरुचिर्वासुपूज्यार्कतुल्यो, लोकं सद्धीरपाताशमरुचिरपवित्रासहारिप्रभाऽत्र । लुम्पन् स्वैर्गोर्विलासैर्जगति घनतमो दुर्नयध्वस्ततत्त्वाऽऽलोकं सद्धीरपाता शमरुचिरपवित्रास! हारिप्रभाव! ॥ १ ॥ लोकानां पूरयंती सपदि भगवतां जन्मसंज्ञे गतिर्मे, हृद्या राजी वनेऽत्राभवतुदमरसार्थानताऽपातमोहा । साक्षात् किं कल्पवल्लिर्विबुधपरिगता क्रोधमानार्त्तिमायाहृद् या राजीवनेत्रा भवतु दमरसाऽर्थानतापा तमोहा ॥ २ ॥ उत्तुङ्गस्त्वय्यभङ्गः प्रथयति सुकृतं चारुपीयूषपानाऽऽस्वादे शस्तादरातिक्षतशुचि सदनेकान्त! सिद्धान्त! रागः । रंगद्भंगप्रसङ्गोल्लसदसमनये निर्मितानङ्गभङ्गस्त्वादेश! स्तादऽरातिक्षतशुचिसदने कान्त! सिद्धांतरागः ॥३॥ वाग्दे! विप्रीणयंती पटु त्रिविधनयोन्नीतशास्त्रार्थनिष्ठाशंकांते देहि नव्येरितरणकुशले! सुभ्रु! वादे विशिष्टम् । श्रद्धाभाजां

प्रसादं सुमतिकुमुदिनीचन्द्रकान्ते ! प्रपूर्णाशं कान्ते ! देहिनव्येऽरितरणकुशले सुभ्रुत्रा देवि ! शिष्टम् ॥ ४ ॥

पद्मोल्लेत्यादि, अरुचिरपवित्रासहारिप्रभ!-रुचिरपवित्रसाध्वसहवौद्धादिगन्तुप्रभाशून्यताहेतो! अपवित्रास! हारिप्रभाव! वासुपूज्य! पद्मोल्लासे, पद्मानां पद्मायाश्च,पटुत्वं दधद् आधिकरुचिः,अविकसुखे अधिका वा,अर्कतुल्यःजगति रैःगोः-वाण्याःकिरणानां च विलासैर्घनतमो,ध्वान्तमज्ञानं च, लुम्पन् सद्धीरपाता शमरुचिःसद्धीःअपाताशं-अनागिवाञ्छं दुर्नयध्वस्ततत्वालोकं लोकं अव-रक्ष॥ १॥लोकानामित्यादि, लोकानां सपदि-शीघ्रं अर्थान् पूरयंती अभवतुद्-भवपीडाशून्या अमरसार्थानता तमोहा क्रोधमानार्तिमायाहन् अगातमोहा दमरसा अतापा राजीवनेत्रा-कमलनयना किं साक्षात् विबुधपरिगता कल्पवल्लिः?इत्या भगवतां राजी अत्र जन्मसंज्ञे वने मे गतिर्भवतु॥२॥ उत्तुङ्गेत्यादि, सदनेकान्त! रङ्गद्भङ्गप्रसङ्गोल्लसद्! निर्मितानङ्गभंगस्वादेश ! कृता कामनाशे मनोज्ञाज्ञा येन शस्तादर!- प्रशस्तबहुमान कान्त! सिद्धान्त! अतिक्षतशुचि-सर्वथानाशितशोके असमनये अरातिक्षतशुचिसदने-वैरिक्षतिहेतुभाग्यभवने चारुपीयूषपानास्वादे सिद्धान्तरागः- सिद्धव्यवच्छेदोऽपराधो यत्र तादृक् सुकृतं प्रथयति त्वयि अभंग उत्तुङ्गो रागः स्तात् ॥ ३ ॥ वागित्यादि, नव्येरितरणकुशले!, ईरितं-प्रेरितं, सुभ्रु! सुमतिकुमुदिनीचन्द्रकान्ते!-सन्मतिकैरविणीचन्द्रप्रभे! कान्ते!-मनोज्ञे देहिनव्ये-प्राणिस्तुत्ये ! वाग्दे!- बुद्धिप्रदे! देवि! शिष्टं विप्रीणयन्ती विविधनयोन्नीतगाम्भार्थनिष्ठाशङ्कांते-नानानयविहितवादनिष्ठसदेहनाशने अरितरणकुशले वादे श्रद्धाभाजां सुभ्रुवा--सद्भ्रकुट्या प्रपूर्णाऽऽशं विशिष्टं प्रसादं पटु देहि ॥४॥ इति श्रीवासुपूज्यस्तुतयः १२ ॥

## ॥ अथ श्रीविमलस्तुतिः । ज्सजस्यलगाः पृथ्वी जैः ॥

नमो हतरणायते! समदमाय पुण्याशया, सभाजित ! त्रिभासुरैर्विमल ! विश्वमारक्षते । न मोहतरणाय ते समदमाय! पुण्याशया-

ऽसभाजित विभासुरैर्विमलविश्वमारक्षते' ॥ १ ॥ महाय तरसा हिताऽजगतिबोधिदानामहो, दया भवतुदां तताऽसकलहाऽसमानाऽऽभया । महायतरसा हिता जगति बोऽधिदाना महोदया भवतु दान्तताऽसकलहास मानाऽभया ॥ २ ॥ क्रियादरमनन्तरागततया-चितं वैभवं, मतं समुदितं सदा शमवताऽभवेनोदितम् । क्रियादरमनन्तरागततया चितं वैभवं, मतं समुदितं सदाऽऽशमवता भवे नो दितम् ॥ ३ ॥ प्रभावितरतादरं सुरभियाततारोहिणीहिताशुगुरु चापराजितकराशमारोचिता । प्रभा वितरतादरं सुरभियाऽतता रोहिणी, हिताऽऽशु गुरुचापराजितकरा शमारोचिता ॥ ४ ॥

'नमोइत्यादि' हृतरणायते !, आयतिः- उत्तरकालः, पुण्याऽऽशया विभासुरैः- दीप्रैः असुरैः सभाजित!-सत्कृत विमलविश्वमारक्षते!-निर्मलभव्यकन्दर्पनाशक! पुण्याशयाऽसभाजितविभ!-पवित्राशयेन सभया न जिता विभा यस्य, न समदमाय!, मदो-मानः, विमल! असमदमाय दमो-दान्तिः, विश्वं आरक्षते मोहतरणाय ते नमः॥१॥ 'महे' त्यादि, अहो जगति भवतुदां--संसारव्यथकानां अजगतिबोधिदानां-सिद्धिगतिहेतुबोधिदायकानां तता-विस्तीर्णा असकलहा-क्लेशमुक्ता आभया-कान्त्याऽसमाना अधिदाना-प्रचुरवितरणा महोदया महाऽऽयतरसा हिता असकलहासमाना-हास्यमदवियुक्ता अभया दया तरसा महाय भवतु ॥ २ ॥ 'क्रिये' त्यादि, सदा शमवता सदाशं-शुद्धाशावन्तं अवताऽभवेनोदितं क्रियाऽऽदरं अनन्तराऽऽगततया-अविच्छिन्नपरम्परया चितं अनन्तरागततयाचितं, रागः- आदरः तेन, ततैः याचितं समुदितं-हर्षयुतेन प्राप्तं भवे नोदितं, अनोदितं-न खण्डितं वा, समुदितं-सूत्रनिर्युक्त्यादिसमूहमयं वैभवं-विभुकथितं मतं अरं-अत्यर्थं वैभवं क्रियात्॥३॥'प्रभे' त्यादि, प्रभा-प्रकृष्टकान्तिमती सुरभियाततारोहिणी, गां प्राप्ता स्फारविचारिणी च गुरुचापराजितकरा, चापं-धनुः, अपराजितकराऽऽशमारोचिता-करः-

पाणिः कान्तिर्वा आशा-वांछा म.रः- कामः सुरभिया ऽऽतता आरोचिता हिता रोहिणी आशु प्रभावितरताऽऽदरं, अतिशयार्थे तरप्, ईहिताशुक् पूर्णवाञ्छत्वात् उरु विस्तीर्णं अरं शं वितरतात् ॥ ४ ॥ इति श्रीविमलजिनस्तुतयः ॥ १३ ॥

## ॥ अथ श्रीअनन्तजिनस्तुतिः ॥ नभभ्रा द्रुतविलम्बितम् ।

कलितमोदमनं तरसाश्रये, शिवपदे स्थितमस्तभवापदम् । त्रिदशपूज्यमनन्तजितं जिनं, कलितमोदमनन्तरसाश्रये ॥ १ ॥ जिनवरा गततापदरोचितां, प्रददतां पदवीं मम शाश्वतीम् । दुरितहृद्वचना न कदाचनाजिनवरागततापदरोचिताम् ॥ २ ॥ सुरसमानसदक्षरहस्य' ते, मधुरिमागम' सोऽस्तु शिवाय नः । जगति येन सुधाऽपि घनप्रभासुरसमानसदक्षर' हस्यते ॥३॥ सदासिरक्षतिभा सुरवा जिनं, जगदिता फलकेपुधनुर्द्धरा । जयति येयमिह प्रणताऽच्युता, सदसि रक्षति भासुरवाजिनम् ॥ ४ ॥

'कलिते' त्यादि, कलितमोदमनं-कलहाज्ञाननाशकं अस्तभवापदं त्रिदशपूज्यं कलितमोदं अनन्तरसाश्रये-ईपत्प्राग्भारस्थाने शिवपदे स्थितं अनन्ताजितं जिनं तरसाऽऽश्रये॥१॥ 'जिने' त्यादि, हे दुरितहृद्वचना जिनवरा मम गततापदरोचितां-दुःखभयापगमेनोचितां न कदाचन किंतु? शाश्वतीं आजिनवरागततापदरोचितां-रणनवप्रीतिकृतदुःखमुक्तां पदवीं प्रददतां॥२॥ 'सुरे' त्यादि, सुरसमानसदक्षरहस्य!-सुरसमनस्विनां निपुणानां चोपनिषद्भूत! घनप्रभासुरसमानसदक्षर!- निविडदीप्तसप्रमाणोत्तमाक्षर! आगम! येन जगति सुधाऽपि हस्यते स ते मधुरिमा नः शिवायास्तु ॥३॥ 'सदसी' त्यादि, इह या इयं जिनं प्रणता सदासिः अक्षतिभा सुरवा भासुरवाजिनं इता फलकेपुधनुर्धरा इपुः- शरः सदसि-पर्षदि जगत् रक्षति सा अच्युता जयति ॥ ४ ॥ इत्यनन्तजिनस्तुतयः ॥ १४ ॥

## ॥ अथ श्रीधर्म्मनाथस्तुतिः ॥ तयुजो र्जः पथ्या ।

श्रीधर्म्म! तव कर्म्मद्रुवारणस्य सदायते!। स्तवं कर्त्तुं कृतद्वेपिवारणस्य सदा यते॥१॥ गिरा त्रिजगदुद्धारं, भाऽसमाना ततान या। श्रिया जीयाज्जिनाली सा, भासमानाऽतताऽनया ॥ २ ॥ वचः पापहरं दत्तसातं केवलिनोदितम्। भवे त्राणाय गहने, सातं केऽवलिनोदितम् ॥ ३ ॥ दद्युः प्रसादाःप्रज्ञप्त्याः शक्तिमत्या जिता दराः। तस्या यया द्विपां सर्वे, शक्तिमत्याजितादराः ॥ ४ ॥

'श्रीधर्मे' त्यादि, हे सदायते!-शुभोदर्के! श्रीधर्म! कर्मद्रुवारणस्य-पापवृक्षगजस्य कृतद्वेपिवारणस्य तव सदा स्तवं कर्त्तुं यते-उद्यच्छामि॥१॥ 'गिरे' त्यादि, या श्रिया भासमाना अततानया-अविहितान्याया भाऽसमाना जिनाली गिरा त्रिजगदुद्धारं ततान सा जीयात्॥२॥ 'वच' इत्यादि, केवलिनोदितं-सर्वज्ञप्रणीतं अवलिनोदितं-न बलवद्वादिप्रेरितं दत्तसातं पापहरं वचः सातङ्के-दुःखमये गहने भवे त्राणाय, अस्त्विति शेपः॥३॥ दद्युरित्यादि, यया शक्तिमत्या द्विपां सर्वे दरा जिताः तस्याः प्रज्ञप्त्याः अत्याजिताऽऽदराः प्रसादाः शक्तिं दद्युः॥४॥ इति धर्मनाथस्तुतयः ॥१५॥

## ॥ अथ श्रीशान्तिजिनस्तुतिः ॥ म्सौ ज्सौ तौ गः शार्दूलविक्रीडितं ठछैः

अस्याभूद् व्रतघाति नातिरुचिरं यद्येव संसेवना-दक्षोदं भरतस्य वैभवमयं साराजितं तन्वतः। लिप्सो! शान्तिजिनस्य शासनरुचिं सौख्यं जयद् ब्रह्म भो, दक्षोऽदंभरतस्य वैभवमयं साराजितं तन्वतः ॥१॥ येपां चेतसि निर्मले शमवतां मोक्षाध्वनो दीपिका, प्रज्ञालाभवतां क्रिया सुरुचिताऽरं भावनाऽऽभोगतः। ते श्रीमज्जिनपुङ्गवा हृतभया नित्यं विरक्ताः सुखं, प्रज्ञाला भवतां क्रियासुरुचितारंभावना भोगतः ॥ २ ॥ मिथ्यादृष्टिमतं यतो ध्रुवमभूत् प्रध्वस्तदोषात् क्षितावाऽऽचारोचितमानमाऽरयमदंभावारितापाप! हे।

तं सिद्धान्तमभङ्गभङ्गकलितं श्रद्धाय चित्ते निजे, वाचारोचित ! मानमारयमदं भावारितापाहे ॥ ३ ॥ शत्रूणां घनधैर्यनिर्जितभया त्वां शासनस्वामिनी, पातादाऽऽनतमानवा सुरहिता रुच्या सुमुद्राऽऽजिषु । श्रीशान्तिक्रमयुग्मसेवनरता नित्यं हतव्यग्रता-पातादानतमा नवासु रहिता रुच्या सुमुद्राऽऽजिषु ॥ ४ ॥

'भो' इत्यादि, भो यद्येव भवमयं सौख्यं जयद् ब्रह्म लिप्सो ! अतः दक्षःअस्य न व्रतघाति अतिरुचिरं साराजितं, सारं-बलं, भरतस्य अक्षोदं वैभवमयं साराजितं-चक्रित्वलक्ष्मीशोभितं तन्वतः अदंभरतस्य शान्तिजिनस्य संसेवताद् वै शासनरुचि तनु ॥ १ ॥ 'येषा' मित्यादि, येषां शमवतां प्रज्ञालाभवतां निर्मले चेतसि भावनाऽऽभोगतो मोक्षाध्वनो दीपिका क्रिया अरं सुरुचिता ते हतभया उचितारंभभावना भोगतो नित्यं विरक्ताः प्रज्ञाला जिनपुङ्गवा भवतां सुखं क्रियासुः- विदध्युः ॥ २ ॥ 'मिथ्ये' त्यादि, हे अपाप ! अदंभावारित ! वाचारोचित ! यतः प्रध्वस्तदोषात् क्षितौ मिथ्यादृष्टिमतं ध्रुवं अरयं-क्षीणवेगं अभूत् तं आचारोचितं अभङ्गभङ्गकलितं मानमारयमदं-गर्वकाममृत्युखण्डकं सिद्धान्तं निजे भावारितापापहे- भावशत्रुतापनाशके चित्ते श्रद्धाय- श्रद्धां कृत्वा आनम ॥ ३ ॥ 'शत्रूणा' मित्यादि, सुमुद्र ! त्वां शत्रूणां नवासु राजिषु घनधैर्यनिर्जितभया आनतमानवा सुराहिता सुमुद्राजिषु रुच्या हतव्यग्रतापातादानतमा-नाशिताऽऽकुलत्वपतनकृपणताऽज्ञाना रुच्या-वांछया रहिता श्रीशान्तिक्रमयुग्मसेवनरता शासनस्वामिनी नित्यं पातात् ॥ ४ ॥ इति श्रीशान्तिनाथजिनस्तुतयः ॥ १६ ॥

## ॥ अथ श्रीकुन्थुजिनस्तुतिः ॥ नौ म्यौ यो मालिनी

स जयति जिनकुंथुर्लोभसंक्षोभहीनो, महति सुरमणीनां वैभवे सन्निधाने। इह भवति विना यं मानसं हंत केषां, महति सुरमणीनां वैभवे

सन्निधानं?॥१॥जयति जिनततिः सा विश्वमाधातुमीशाऽमदयतिमहिताऽरं किन्न रीणामपाशम्?। विलसितमपि यस्या हंत नैव स्म चित्तं, मदयति महि तारं किन्नरीणामपाशम् ॥२॥ अवतु गदितमाप्तैस्त्वा मतं जन्मसिन्धौ, परमतरणहेतुश्छायया भासमानैः। विविधनयसमूहस्थानसंगत्यपास्तापरमतरणहेतुश्छायया भाऽसमानैः ॥ ३ ॥ कलितमदनलीलाऽधिष्ठिता चारु कान्तात्, सदसि रुचितमाराद् धाम हन्ताऽपकारम् । हरतु पुरुपदत्ता तन्वती शर्म पुंसां, सदासिरुचितमाराद्धाऽमहं तापकारम् ॥ ४ ॥

'स' इत्यादि, इह यं विना सन्निधाने-सुनिधौ सुरमणीनां-यक्षाधिष्ठितचतुर्दशरत्नानां महति वैभवे हन्त केषां मानसं भवति स सन्निधाने सुरमणीनां महति वैभवे लोभसंक्षोभहीनो जिनकुंथुर्जयति॥१॥ 'जयती' त्यादि, हन्त यस्याः तारं-उज्ज्वलं महि-माहिमवत् चित्तं अपाशं-निर्बन्धनं किन्नरीणां विलसितमपि नैव मदयति स्म सा अरं अमदयतिमहिता-निर्मदसाधुपूजिता जिनततिः विश्वं रीणाऽऽमपाशं, आमो-रोगः, आधातुं ईशा किं न जयति?॥२॥ 'अवत्वि' त्यादि, छायया-कान्त्या भासमानैः भाऽसमानैः आप्तैः जन्मसिन्धौ परमतरणहेतुः छायया विविधनयसमूहस्थानसंगत्यपास्ताऽपरमतरणहेतुः, सर्वनयवृन्दसापेक्षतानिराकृतान्यनयान्तरत्वात्, गदितं मतं त्वा अवतु ॥३॥ 'कलिते' त्यादि, हन्त रुचितमारात् कान्तात् कलितमदनलीला चारु धाम अधिष्ठिता सदासिः उचितं आराद्धा पुंसां शर्म तन्वती पुरुषदत्ता सदासि अमहं-पूजाशून्यं तापकारं अपकारं हरतु ॥ ४ ॥ इति श्रीकुन्थुजिनस्तुतयः १७

## ॥ अथ अरनाथजिनस्तुतिः ॥ षश्चुगौ द्वितीयषष्ठौ जो लींर्वा द्विपदी ॥

संस्तवीम्यहं त्वा हरन्तमरजिन ! सततं भवोद्भवाऽमानमदसुरसार्थवाचंयम ! दंभरताधिपापदम् । विगणितचक्रवर्तिविभव-

मुद्दामपराक्रमं हता-मानमदसुरसार्थवाचं यमदं भरताधिपाऽऽपदम् ॥ १ ॥ भीमभवं हरन्तमपगतमदकोपाटोपमर्हतां, स्मरतरणाधिकारमुदितापदमुद्यमविरतमुत्करम् । भक्तिनताखिलसुरमौलिस्थितरत्नरुचाऽरुणक्रम, स्मरतरणाधिकारमुदितापदमुद्यमविरतमुत्करम् ॥२॥ भीमभवोदधेर्भुवनमेकतो विधुशुभ्रमंजसा, भवदवतो यशोऽभितरणेन नमाऽदितं नयमितं हि तम्। जिनपसमयमनन्तभङ्गं जन'दर्शनशुद्धचेतसा, भवदवतोय ! शोभित ' रणेन न मादितं नयमितं हितम् ॥ ३ ॥ चक्रधरा करालपरघातवलिष्ठमधिष्ठिता प्रभासुरविनता तनुभवपृष्ठमनुदितापदऽरं गतारवाक्। दलयतु दुष्कृतं जिनवरागमभक्तिभृतामनारतं, सुरविनता तनुभवपृष्ठमनु दितापदरंगतारवाक्॥४॥

'हरन्त' मित्यादि, आनमदऽसुरसार्थवाचंयम!- नम्रासुरवृन्दसाधो भरताधिप! अरजिन' सततं भवोद्भवां आपदं हरन्तं'दंभरताऽऽधिपापदं, दो खण्डने, विगणितचक्रवर्तिविभवं उद्दामपराक्रमं हताऽमानमदसुरसार्थवाचं-नाशितासीममदः शोभनरसार्थवाक् च यस्तं यमदं-व्रतदं मृत्युखण्डकं वा त्वानहं संस्तवीमि ॥१॥ 'भीमे' त्यादि, अपगतमदकोपाटोपं उदितापदं रणाधिकारं भीमभवं हरन्तं उद्यमविरतमुत्करं, मुत्-प्रमोदः, भक्तिनताखिलसुरमौलिस्थितरत्नरुचाऽरुणक्रमं स्मरतरणाऽधिकारमुदितापदं-कामजयपदवीमोदास्पदं उद्यं-परमलक्ष्मीकं अर्हतां उत्करं-समूहं अविरतं-सदा स्मरत ॥ २ ॥ 'भीमभव' इत्यादि, जन' भवदवतोय !-संसारदावपानीय ! शोभित ! एकतो भीमभवोदधेः भुवनं अवतः अञ्जसा-शीघ्रं विधुशुभ्रं-चन्द्रोज्ज्वलं यशोऽभवत् तं अदितं-अखण्डितं नयमितं-अवन्धनं अनन्तभङ्गं रणेन न मादितं नयं इतं हितं जिनपसमयं दर्शनशुद्धचेतसा नम॥३॥ 'चक्रे' त्यादि, करालपरवातवलिष्ठं-भयङ्करशत्रुघातप्रबलं तनुभवपृष्ठं-गरुडपृष्ठं अधिष्ठिता प्रभासुरविनता अनुदितापन् अरं गतारवाक्-रिपुसमूहवाग्नाशिनी सुरविनता तनुभवपृष्टं-देहभवयोः प्रभं अनु-लक्ष्यीकृत्य दितापदरंगतारवाक्-खण्डितविपद्रंगाविरहा

मधुरवाक् च चक्रधरा जिनवरागमभक्तिभृतां अनारतं-सदा दुष्कृतं दलयतु ॥ ४ ॥ इति श्रीअरनाथस्तुतयः ॥ १८ ॥

## ॥ अथ श्रीमल्लिजिनस्तुतिः ॥ ज्भौ स्जौ गो रुचिरा घैः ॥

महोदयं प्रवितनु मल्लिनाथ! मेऽघनाघ ! नोदितपरमोहमान ! सः । अभूर्महाव्रतघनकाननेषु यो, घनाघनोऽदितपरमोहमानसः ॥ १ ॥ मुनीश्वरैः स्मृत कुरु सौख्यमर्हतां, सदानतामर! समुदाय! शोभितः। घनैर्गुणैर्जगति विशेषयन् श्रिया, सदानतामरस! मुदा यशोऽभितः ॥ २ ॥ जिनः स्म यं पठितमनेकयोगिभिर्मुदा रसं गतमपरागमाह तं । सदागमं शिवसुखदं स्तुवेतरामुदारसंगतमपरागमाहतम् ॥३॥ तनोतु गीः समयरुचिं सतामनाविला सभा गवि कृतधीरतापदा । शुचिद्युतिः पटुरणदच्छकच्छपी, विलासभागऽविकृतधीरऽतापदा ॥ ४ ॥

'महोदे' त्यादि, यो महाव्रतघनकाननेषु त्वं मेघः अभूः सः अदितपरमोहमानसः-अखण्डितप्रकृष्टोहचित्तः हे अघनाघ! नोदितपरमोहमान!- भव्यमोहमाननाशक! मल्लिनाथ! मे महोदयं प्रवितनु ॥ १ ॥ 'मुनी' त्यादि, श्रिया शोभितः जगति घनैर्गुणैः अभितो यशो विशेषयन् मुदा मुनीश्वरैः स्मृत! सदानतामर! सदानतामरस!- सदानं कमलं यस्य, अर्हतां समुदाय! सौख्यं कुरु ॥२॥ 'जिन' इत्यादि, अनेकयोगिभिः पठितं उदारसंगतं अपरागमाऽहतं शिवसुखदं अपरागं यं जिन आह स्म तं सदागमं मुदा स्तुवेतराम्॥३॥ 'तनोत्वि' त्यादि, अनाविला सभासकान्तिः कृतधीरतापदा शुचिद्युतिः पटुरणदच्छकच्छपी-निपुणं ध्वनत्शुभवीणा विलासभाग् अविकृतधीः अतापदा गीः गवि-भूमौ सतां समयरुचिं तनोतु ॥ ४ ॥ इति श्रीमल्लीजिनस्तुतयः ॥ १९ ॥

## ॥ अथ श्रीमुनिसुव्रतजिनस्तुतिः ॥ न्जभ्जजा ल्गाववितथम् ।



तव मुनिसुव्रत! क्रमयुगं ननु कः प्रतिभावनघन! रोहितं नमति मानितमोहरणम् । नतसुरमौलिरत्नविभया विनयेन विभ-वनघ! नरो हितं न मतिमानितमोहरणम् ॥१॥ अवति जगंति याऽऽशु भवती मयि पारगतावलि! तरसेहितानि सुरवारसभाजितया । दिशतु गिरा निरस्तमदना रमणीहसिताऽवलितरसे हितानि सुरवा रसभाजि तया ॥ २ ॥ यतिभिरधीतमार्हतमतं नयवज्रहताघन-गमऽभङ्गमानमरणैरनुयोगभृतम् । अतिहितहेतुतां दधदपास्तभवं रहितं, घनगमभङ्गमानम रणैरनु योगभृतम् ॥ ३ ॥ वितरतु वा-ञ्छितं कनकरुग् भुवि गौर्ययशोहृदिततमा महाशुभविनोदिविमानवताम् । रिपुमदनाशिनी विलसितेन मुदं ददती, हृदि ततमाम-हाऽऽशु भविनो दिवि मानवताम् ॥ ४ ॥

'तवे' त्यादि, प्रतिभावनघन-मतिकाननमेघ! विभो! अनघ! मुनिसुव्रत को मतिमान् विनयेन तव नतसुरमौलिरत्नविभया विभा-कान्तिः रोहितं-मिश्रं मानितमोहरणं तमः-अज्ञानं हतमोहरणं हितं क्रमयुगं ननु न नमति? ॥१॥ 'अवती' त्यादि, हे पारगतावलि! या भवती जगंति अवति सा निरस्तमदना सुरवा सुरवारसभाजितया-देवसमूहसत्कृतया तया गिरा रसभाजि रमणीहसितावलितरसे मयि तरसा ईहितानि हितानि दिशतु॥२॥ 'यती' त्यादि, हे नयवज्रहताऽघनगं नगः-पर्वतः अनुयोगभृतं अतिहितहेतुतां दधत अपास्तभवं रणैः रहितं योगभृतं योगो-द्वहनात् अनु अभंगमानमरणैः यतिभिः अधीतं घनगमभंगं आर्हतमतं आनम ॥३॥ 'वितरे' त्यादि, कनकरुक् अयशोहृद् हततमा-अज्ञान-

रहिता रिपुमदनाशिनी आमहा-रोगापहा दिवि विलासितेन मानवतां महाशुभाविनोदिविमानवतां हृदि मुदं ददती गौरी भुवि भविनः ततं वांछितमाशु वितरतु ॥ ४ ॥ इति श्रीमुनिसुव्रतजिनस्तुतयः २० ॥

## ॥ अथ श्रीनमिस्तुतिः ॥ यम्नस्भलगाः शिखरिणी चैः ।

यतो यान्ति क्षिप्रं नमिरघवने नात्र तनुते, विभावर्योऽनाशंकमनलसमानं दितमदः । दधद् भासां चक्रं रविकरसमूहादिव महाविभावर्यो नाशं कमनलसमानन्दितमदः ॥१॥ भवोद्भूतं भिंद्यात् भुवि भवभृतां भव्यमहिता, जिनानामायासं चरणमुदिताऽऽली करचितम् । शरण्यानां पुण्या त्रिभुवनहितानामुपचिताजिनानामायासंचरणमुदितालीकरचितम् ॥ २ ॥ जिनानां सिद्धान्तश्चरणपटु कुर्यान् मम मनोऽपराभूतिर्लोके शमहितपदानामविरतम् । यतः स्याच्चक्रित्वत्रिदशविभुताद्या भवभृतां, परा भूतिर्लोकेशमहितपदानामविरतम् ॥ ३ ॥ गजव्यालव्याघ्रानलजलसमिद्बन्धनरुजोऽगदाऽक्षाऽऽली काली नयमवति विश्वाऽसमहिता । जनैर्विश्वध्येया विघटयतु देवी करलसद्गदाक्षाऽलीकाऽलीनयमवति विश्वासमहिता ॥ ४ ॥

'यतो' इत्यादि, अघवने-पापकानने अनलसमानं अदः भासां चक्रं दधत् विभावर्यः-कान्तिप्रधानः दितमदः नमिः अनलसं-क्षिप्रं कं आनन्दितं न तनुते ?, रविकरसमूहात् इव महाविभावर्यो यतो नाशं यान्ति ॥ १ ॥ 'भवो' इत्यादि, भव्यमहिता चरणमुदिता पुण्या त्रिभुवनहितानां शरण्यानां जिनानां आली भुवि भवभृतां करचितं-स्वयंबद्धं उदितालीकरचितं-मृषोक्तिविहिनं उपचिताजिनानामायासंचरणं-रणबहुविधरोगप्रयासवृत्तिहेतुं भवोद्भूतं आयासं भिंद्यात् ॥ २ ॥ 'जिनाना' मित्यादि, यतः लोके अविरतं भवभृतां चक्रित्वात्रिदशविभुताद्या

पराभूतिः-समृद्धिः स्यात् स शमहितपदानां लोकेशमहितपदानां जिनानां अपराभूतिः-अनाबाधः सिद्धान्तः मम अविरतं- व्रतशून्यं मनः चरणपटु कुर्यात् ॥३॥ 'गजे' त्यादि, अगदाक्षाली-नीरोगेन्द्रियसखिका विश्वे असमहिता-असाधारणोपकारिणी जनैः विश्वध्येया करलसद्गदाऽक्षा अक्षः-पाशः विश्वासमहिता काली देवी नयं अवति-न्यायस्य रक्षाकारके अलीकाऽलीनयमवति-मृषाऽप्रक्तमहाव्रतयुक्ते गजव्यालव्याघ्रानलजलसमिद्बन्धनरुजः विघटयतु ॥ ४ ॥ इति श्रीनमिनाथजिनस्तुतयः २१ ॥

## ॥ अथ श्रीनेमिजिनस्तुतिः ॥ म्सौ ज्सौ तौ ठ्छैः शार्दूलविक्रीडितम् ।

त्वं येनाक्षतधीरिमा गुणनिधिः प्रेम्णा वितन्वन् सदा, नेमेऽकान्त! महामना विलसतां राजीमतीरागतः । कुर्यास्तस्य शिवं शिवांगज! भवांभोधौ न सौभाग्यभाग्, नेमे' कान्तमहामनाविल' सतां राजीमतीरागतः ॥१॥ जीयासुर्जिनपुंगवा जगति ते राज्यर्द्धिषु प्रोल्लसद्धामानेकपराजितासु विभयासन्नाभिरामोदिताः । योधालीभिरुदित्वरा न गणिता यैः स्फातयः प्रस्फुरद्धामानेकपराऽजितासु विभया सन्नाभिरामोदिताः ॥ २ ॥ या गङ्गेव जनस्य पङ्कमखिलं पूता हरत्यंजसाभारत्यागमसंगता नयतता मायाचिता साधुना । अध्येतुं गुरुसन्निधौ मतिमता कर्तुं सतां जन्मभीभारत्यागमसंगता न यततामायाचिता साऽधुना ॥ ३ ॥ व्योम स्फारविमानतूरनिनदैः श्रीनेमिभक्तं जनं, प्रत्यक्षामरसालपादपरतां वाचालयंती हितम् । दद्यान्नित्यमिताम्रलुम्बिलतिकाविभ्राजिहस्ताऽहितं, प्रत्यक्षामरसालपादपरताऽम्बा चालयन्ती हितम् ॥ ४ ॥

'त्वमि' त्यादि, अकान्त '-दुःखान्त' महामनः ! शिवांगज ! नेमे ! अनाविल ! विलसता सतां राजी कान्तमहां वितन्वन् भवांभोधौ

न अतीरागतः-तीरं प्राप्त एव गुणनिधिः सौभाग्यभाक् राजीमतीरागतः अक्षतधीरिमा त्वं येन प्रेम्णा नेमे-नमस्कृतः तस्य सदा शिवं कुर्याः॥१॥ 'जीयासु' रित्यादि, यैः प्रोल्लसद्धामानेकपराजितासु अनेकपाः-हस्तिनः प्रस्फुरद्धामानेकपराऽजितासु परे-शत्रवः राज्यर्धिषु विभयासन्नाभिः-निर्भयाभिर्निकटवर्त्तिनीभिश्च योधाऽऽलीभिः आमोदिताः सन्नगभिरामेदिताः रामाः-स्त्रियः विभया उदित्वराः स्फातयो न गणिताः ते जिनपुंगवा जगति जीयासुः ॥ २ ॥ 'ये' त्यादि, या गंगेव पूता जनस्याखिलं पंकं-कर्दमं पापं च हरति सा आगमसंगता नयतता न असंगता अमायाचिता-मायामुक्तेन मतिमता साधुना गुरुसन्निधौ अध्येतुं आयाचिता भारती सतां अंजसा जन्मभीभारत्यागं कर्तुं यतताम् ॥३॥ 'श्री' त्यादि, श्रीनेमिभक्तं जनं प्रति प्रत्यक्षाऽमरसालपादपरतां- साक्षात्सुरद्रुमवत्चरणतां परत्वं च इता आम्रलुम्बिलतिकाविभ्राजिहस्ता अक्षामरसालपादपरता स्फारविमानतूरनिनदैः व्योम वाचालयन्ती अहितं चालयन्ती अम्बा ईहितं नित्यं दद्यात्॥४॥ इति श्रीनेमिस्तुतयः२२ ॥

## ॥ अथ श्रीपार्श्वजिनस्तुतिः ॥ म्रौ भ्नौ यिः स्रग्धरा छंदः।

सौधे सौधे रसे स्वे रुचिररुचिरया हारिलेखारिलेखा, पायं पायं निरस्ताघनयघनयशो यस्य नाथस्य नाथ! । पार्श्वं पार्श्वे तमोद्रौ तमहतमह! न क्षोभजालं भजालं, कामं कामं जयंतं मधुरमधुरमाभाजनत्वं जन! त्वम् ॥ १ ॥ तीर्थे तीर्थेशराजी भवतु भवतुदस्तारिभीमारिभीमालीकालीकालकूटाकलितकलितयोल्लासमूहे समूहे । या मायामानहर्त्री भवविभवविदां दत्तनिश्वासविश्वाऽनाप्ताऽनाप्ताभिशङ्का विमदविमदनत्राऽसमोहाऽसमोहा ॥२॥ गौरागौरातिकीर्त्तेः परमपरमतहासविश्वासविश्वादेया देयान् मुदं मे जनितजनितनूभावताराव्रतारा । लोकालोकार्थवेत्तुर्नयविनयविधव्यासमानासमानाः, भंगा भंगानुयोगा सुगमसुगमयुक् प्राकृतालंकृताऽ-

लम् ॥ ३ ॥ लोके लोकेशनुत्या सुरससुरसभां राजयंती जयंती, व्यूहं व्यूहं रिपूणां जनभजनभवद्गौरवा मारवामा । कान्ता कान्ताहिपस्येरितदुरितदुरन्ताहितानां हितानां, दद्यादद्यालिमुच्चैरुचितरुचितमा संस्तवे च स्तवे च ॥ ४ ॥

'सौधे' इत्यादि, अहतमह! यस्य नाथस्य निरस्ताघनयघनयशो-निष्पापनीतिजनितां दृढकीर्तिं पायंपायं-पीत्वा पीत्वा अथ हारिलेखारिलेखा-रम्यदानवश्रेणिः स्वे सौधे सौधे-पीयूषजे रसे रुचिररुचिरया-मनोज्ञाभिलापवेगा न, तं न क्षोभजालं कामं-प्रकामं मधुरमधुरमाभाजनत्वं-रम्यवमन्तशोभास्पदत्वं कामं कंदर्पं जयन्तं तमोद्रौ-अज्ञानवृक्षे पार्श्वे-परशुममूहं पार्श्वं हे जन! त्वं अलं भज ॥ १ ॥ 'तीर्थे' इत्यादि, या मायामानहर्त्री अस्तारिभीमारिभीमालीकालीकालकूटा-शत्रुभयमारिभयङ्करानृतश्रेणय एव कालकूटं तदस्तं यया दत्तविश्वासविश्वानाम्रा-वितीर्णविश्वासैरपि जनैर्नाम्रा अनाम्राभिशंका व्यथावदाप्तत्वात् विमदविमदनत्रा-मत्तकामात् रक्षिणी असमोहा-असाधारणविचारा असमोहा-निर्मोहा तीर्थेशराजी भवविभवविदां-भवपराभवविचारकाणां समूहे अकलितकलितया कलिः-क्लेशः उल्लासं ऊहे वहतिस्म सा तीर्थे—संघे भवतुद्-भवनाशिका भवतु॥२॥ 'गौरे' त्यादि, आगौरातिकीर्तिः- सर्वथोज्ज्वलयशमः लोकाऽलोकार्थवेत्तुः परमपरमतह्रासविश्वासविश्वादेया-उत्कृष्टान्यमतहानिविश्वासेन जगदादेया जनितजनितनृभावतारावतारा-जन्माल्पीभावकरणेनोज्ज्वलावतारा नयविनयविधव्यासमानासमाना—नयविनयविधानां व्यासेन मानेषु असमाना अभंगा अभंगानुयोगा सुगमसुगमयुक्-सुपाठगमयुता प्राकृतालंकृता-प्राकृतभाषाशोभिता गौः-वाणी मे अलं मुदं देयात् ॥३॥ 'लोके' इत्यादि, लोके लोकेशनुत्या-राजस्तुत्या सुरससुरसभां राजयंती रिपूणां व्यूहं-नानाविचारयुक्तं व्यूहं-सैन्यन्यामं जयन्ती जनभजनभवद्गौरवा-जनानां भजनाद् गौरवं ददाति मारवामा-कामप्रतिकूला संस्तवे च स्तवे च उचितरुचितमा कान्ताहिपस्य-मनोज्ञनागेन्द्रस्य कान्ता इतदुरित-दुरन्ताहितानां-गतपापानन्तस्थितिमतां हितानां आलिं उच्चैर्दद्यात् ॥ ४ ॥ इति पार्श्वजिनस्तुतयः ॥ २३ ॥

## ॥ अथ श्रीमहावीरस्तुतिः ॥

ना ऋ चण्डवृष्टिः । यथोत्तरमेकैकरवृद्धा अर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः ।

तव जिनवर! तस्य वध्ध्वा रतिं योगमार्गं भजेयं महावीर! पाथोधिगम्भीर! धीरानिशं मुदित! विभव! सन्निधानेऽसमोहस्य सिद्धार्थनामक्ष्माभृत्कुमारापहेयस्य वाचा रतः। मुनिजननिकरश्चरित्रे पवित्रे परिक्षीणकर्म्मा स्फुरद्ज्ञानभाक् सिद्धिशर्माणि लेभेतरामुदितविभवसन्निधानेऽसमोहस्य सिद्धार्थ! नाम क्षमाभृत् कुमारापहे यस्य वाचारतः ॥ १ ॥ नयकमलविकासने का सुरी विस्मयस्मेरनेत्राऽजनि प्रौढभामण्डलस्य क्षतध्वान्त! हि, ! न तव रविभया समानस्य रुच्यांगहाराहितेऽपारिजातस्य भास्वन्महेलास्यभारोचिते। कनकरजतरत्नसालत्रये देशनां तन्वतो ध्वस्तसंसार! तीर्थेशवार! घुसद्धोरणीनत! वर! विभयाऽसमानस्य रुच्याऽगहारा हिते पारिजातस्य भास्वन्! महे लास्यभारोचिते ॥२॥ वचनमुचितमर्हतः संश्रय श्रेयसे प्रीणयद् भव्य! भीमे दधद् ध्वस्ततापं भवाम्भोनिधौ, परमतरणहेतुलाभं गुरावार्यमानन्दितापायशो भावतो भासमानस्य माराजितम्! । दलितजगदसद्ग्रहं हेतुदृष्टान्तनिःपिष्टसन्देहसन्दोहमद्रोहनिर्मोहनिःशेषितापरमतरण! हे'तुलाभंगुरावार्यमानं दितापाय! शोभावतो भाऽसमानस्य माऽऽराजितम् ॥ ३ ॥ अहमहमिकया समाराद्ध्रुमुत्काण्ठितायाः क्षणे वाङ्मयस्वामिनी शक्तिमह्वाय दद्यात्तरां, सकलकलशता रमाराजिता पापहानेकलाभा स्थिताऽसद्विपक्षे मरालेरवार्यागमम्। दधतमिह सतां दिशन्ती सदैंकारविस्फारसारस्वतध्यानदृष्टा स्वयं मंगलं तन्वती, सकलकलशताऽरमाऽऽराजितापापहानेकलाभास्थिता सद्विपक्षेऽमरालेरवार्या गमम् ॥ ४ ॥

'तवे' त्यादि, हे जिनवर ! महावीर ! पाथोधिगंभीर ! धीर! अनिशं मुदित! विभव! सिद्धार्थनामक्ष्माभृत्कुमार ! सिद्धार्थ! क्ष्माभृत्-क्षान्तिमन्! यस्य वाचारतः परिक्षीणकर्मा स्फुरज्ज्ञान भाक् मुनिजननिकर आचारतः कुमारापहे-कंदर्पनाशके पवित्रे चरित्रे सिद्धिशर्माणि लेभेतरां तस्य तव-अपहेयस्य-दूरगतहेयस्य उदितविभवसन्निधाने असमोहस्य असमोहस्य-अनन्यतर्कस्य सन्निधाने रतिं लब्ध्वा योगमार्गं भजेयं, वा पूरणे ॥ १ ॥ 'नये' त्यादि, नयकमलविकासने भास्वन्! क्षतध्वान्त! द्युसद्धोरणीनत-देवराजीप्रणत ! वर ! ध्वस्तसंसार ! तीर्थेशवार! वारः-समूहः रुच्या रविभयासमानस्य प्रौढभामंडलस्य अपारिजातस्य-शत्रुभावशून्यस्य कनकरजतरत्नसालत्रये देशनां तन्वतः विभयाऽसमानस्य हिते पारिजातस्य-कल्पद्रोः तव अंगहाराहिते-कृतांगहारे भास्वन्महेलास्यभारोचिते-कान्तिमत्कान्तावदनप्रभारोचिते लास्यभारोचिते-नृत्यसमूहोचिते महे रुच्यांगहारा-सुन्दराङ्गन्यासा का सुरी विस्मयस्मेरनेत्रा हि नाजनि ? ॥ २ ॥ 'वचने' त्यादि, हे आनन्दित! अदोह! निर्मोह ! निश्शेषितापरमतरण !-नाशितान्यमार्गयुद्ध ! दितापाय ! भव्य ! भावतो भासमानस्य भाऽसमानस्य शोभावतः अर्हतः आर्यं प्रीणयत् गुरौ भीमे भवाम्भोनिधौ परमतरणहेतुलाभं दधत् ध्वस्तपापं अपायशो माराजितं-कामाजितं दलितजगदसद्ग्रहं हेतुदृष्टान्तनिष्पिष्टसंदेहसंदोहं संदोहः-समूहः अतुलाऽभंगुराऽवार्यमानं मानं-प्रमाणं माऽऽराजितं मा-श्रीः उचितं वचनं श्रेयसे संश्रय ॥३॥ 'अहमे' त्यादि, अहमहमिकया समाराधुमुत्कण्ठितायाः अमरालेः-देवश्रेणेः पापहाने क्षणे-उत्सवे सकलकलशता-संपूर्णकुम्भवत् मंगला रमाराजिता कलाभा-मनोज्ञभा असद्विपक्षे-असच्छत्रौ सद्विपक्षे-पक्षद्वययुते मराले-राजहंसे स्थिता आगमं दधतं स्वार्यागमं-भापार्यशास्त्रं दिशंती सदा ऐंकारविस्फारसारस्वतध्यानदृष्टा अरं सकलकलशतामरं-अत्यर्थं कलकलशताकुला स्वयं मंगलं तन्वती आराऽऽजितापाऽपहा अनेकलाभाश्रिता-गणभृत्स्वीकृता अवार्या वाग्भयम्वागिनी सता अत्राय द्रुतं शक्तिं दद्यात्तराम् ॥ ४ ॥ इति श्रीवीरजिनस्तुतयः २४ ॥

यस्यासन् गुरवोऽत्र जीतविजयाः प्राज्ञाः प्रकृष्टाशया, भ्राजन्ते सनया नयादिविजयाः प्राज्ञाश्च विद्याप्रदाः ।
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरः, सोऽयं न्यायविशारदः स्म तनुते विज्ञः स्तुतीरर्हताम् ॥ १ ॥
कृत्वा स्तुतिस्रजमिमां यदवापि शुभाशयान् मया कुशलं । तेन मम जन्मबीजे रागद्वेषौ विलीयेताम् ॥ २ ॥
अन्त्ये प्रशस्तिकाव्यमार्या च सुगम इति नान्वयादि कृतं ॥ पूर्वोद्देशमनोज्ञवर्यवनिताभालेतु पुण्ड्रं पुरं संमेताद्रिसमीपगं मुनिगणै-रावासितं श्रीपदं । सच्छ्राद्धालयमाश्रितेन झरियासंज्ञं कृताऽऽनन्दतः आनन्देन कृतिर्निजाय सततं सद्भिः सदा दृश्यताम् ॥ १ ॥

इति सान्वयार्थं श्रीऐन्द्रस्तुतिसूत्रम्

# * शेठ देवचन्द लालभाई जैन पुस्तकोद्धार फण्ड *

वर्धमान चकलो,
गोपीपुरा—सुरत
१,०००-१-१९४१

बाइन्डर
भीकाजी पानाजी, मुस्तफा मारकीट, मुंबई, ३.